

श्रीवासिष्ठगणपतिमुनिप्रणीतम्

# आदिवेदस्य भाष्यम्

माधुच्छन्दसे दर्शनेग्निमीळ इति नवर्चं प्रथमं सूक्तमाग्नेयम्।

यथा—

(१) ऋ॰—अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्।
होतारं रत्नधातमम् ॥

भाष्यम्-यज्ञस्य बहिर्योगस्यान्तर्योगस्य च। पुरोहितमग्रे हितम्। नेतारमित्यर्थः। होतारं तन्नामकम्। ऋत्विजम्। बहिर्योगेऽन्तर्योगे च। रत्नधातममतिश्रेष्ठवस्तूनां धारयितारं पालयितारं वा। अग्नितन्नामकम्। देवम्। ईळेस्तौमि। अहमिति शेषः।

आग्नेयसूक्तसमुच्चयार्थं परिशीलनादिदमवगम्यते। जीवो वागिन्द्रियम्। जठराग्निश्चेति त्रीणि रूपाण्यध्यात्ममग्नेः। दिवो महो विद्युत्पार्थिवो ज्वलनश्चेति त्रीण्यधिभूतम्। तेषु वागिन्द्रियं ब्रह्मणस्पतेरपि रूपं वर्ण्यते। विद्युदिन्द्रस्य च। दिवो महो रुद्रस्येन्द्रस्य च। कथमत्र विरोधपरिहारः। अन्यश्चास्ति तत्त्वदृष्ट्या विरोधः। अधिभूतं पार्थिवो ज्वलनोऽध्यात्मं जठराग्निरित्युपपद्यते पचनक्रियासाधर्म्यात्। जीवस्तु कथं स्यात्।

अत्र ब्रूमः। सामान्यतो ज्योतिरेवाग्निः। न केवलं पार्थिवज्योतिः। ज्योतिश्च चतुर्विधम्। आत्मादिवो महो विद्युज्ज्वलनश्चेति। अन्तरिक्षान्तरव्यापी परमाकाशो द्यौरुच्यते दृश्यप्रपञ्चमध्ये। दृश्यस्य

परस्ताच्छुद्धस्यैव परमाकाशस्य द्यौरित्यभिधानम् । यदा दिव्योऽपि क्वचित् द्यौरुच्यते तत्तत्र दिव्यमहसो बाहुल्यात् दिवोऽस्ति गुप्तं व्यापकं तेजः । तदेव शब्दविद्युतोर्मूलम् । तत्सारभूयिष्ठमेव वागिन्द्रियम् । तस्यैव भुवनानि पचनः कालाख्या । अयं दिवोमह इति शब्दस्यार्थः । इतः परं तदेतद्दिवो महो लघुकालपदेन व्यवहरामः । एवं ज्योतिःस्वरूपस्याग्नेः जीवादिरूपेण कालादिरूपेण च वर्णनं नायुक्तम् । एतेन द्वितीयो विरोधश्च परिहृतो भवति । सिद्धश्चत्येवम् । अग्निः पृथिवीस्थो न इति प्राचीनाचार्योक्तिस्तु प्रत्युक्ता स्यात् । अस्त्यन्यः समन्वयो यथा सोक्तिः प्रत्युक्ता न स्यात् । सर्वाण्यपि प्रार्थनानि फलवन्ति स्युः सनिश्रोतरि । असनिश्रोतर्यरण्यरोदनतुल्यानि भवेयुः । जीवः सोपाधिक एव शृणुयान्न जीवतत्त्वम् । वागिन्द्रिय-जठराग्नि-कालविद्युज्ज्वलनानां श्रोतृत्वन्तु सर्वथा नोपपद्यते । तस्मादाग्नेयानां सूक्तानामध्येतृभिर्जप्यमानानां श्रोता कश्चि-द्वक्तव्यः । पूर्वमेव साध्यं नोत्तरम् । अस्ति पृथिव्या आत्मा । न जडा पृथिवी । अस्माकं जीवानां यथेदं शरीरं तथा कस्यचिन्महसो जीवस्य पृथिवी शरीरमित्युक्तं भवति । स एव जीवो महानग्नेराधिदैविकं स्वरूपम् । तेनार्थवन्त्यग्निमुद्दिश्य प्रार्थनानि । एष पृथिवीशरीरोऽग्निः कूटस्थः पार्थिवानां जीवानाम् । वर्जयित्वा तं यः केवलेन कर्मणा तरितु-मिच्छति सोऽधर्ममेव जानाति । तस्याग्नेः शारीरज्योतिर्वदयं ज्वलनोग्निः । तस्य कालविद्युदादिरूपेण च वर्णनमग्नेर्व्यापकतत्त्वमन्वीक्ष्येति बोद्धव्यम् । सर्वाश्च देवतास्तुतयो न केवलं व्यक्तिदृष्ट्या अपि तु तत्त्व-दृष्ट्या च भवन्त्युच्चावचाः ।

प्रकृतमनुसरामः । अग्नेर्ज्वलनरूपत्वादन्तर्यागस्य । वागिन्द्रिय-रूपत्वाद्बाह्ये यागे सहोतर्त्विक् । वागेव हि शंसन्ति शस्त्राणि । जीव-रूपत्वादन्तर्यागे होतर्त्विक् । ध्रुवया स्मृत्या सम्पूर्णात्मसमर्पणेन च मनोमये महेन्द्राभिमुखे सोयमन्तर्यागो भक्तस्यान्तः पाकाय प्रवर्तते । स एव नामान्तरेण देवानां यागः । ब्राह्मणेषु दृष्टाः पुरुषविधानामिव तत्कथाः कर्मस्तुत्यर्थत्वान्नस्यार्थे प्रमाणं भवन्ति । तस्मिन्नन्तर्यागे निजया

शक्त्या देदीप्यमानो हृदयवेदिस्थो जीवाग्निर्देवानां ह्लाता भवति। न तस्याह्लानं व्यर्थं भवेत्। सर्वे देवाः स्वस्वविभूतिभूतेषु प्राणेषु शक्त्युल्लासात्प्रादुर्भूय साधयन्त्यन्तर्यागम्।

ईळ इति अत्र डकारस्य स्थाने ळकारः प्राचां भाषायाम्। एवमुत्तरत्रापि ळकारश्रवणेषूह्यम्।

( २ ) ऋ.—अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत।
सदेवाँ एहवक्षति ॥

भाष्यम्–पूर्वेभिः पूर्वैः। उत किंच। नूतनैः। ऋषिभिः। ईड्यः स्तुत्यः। सोऽग्निः। देवान्। इह यागे बाह्ये आन्तरे वा। आवक्षत्यावहतु। महावैभवानां देवानां स्वस्वशक्तिभिः सूक्ष्माभिरवतरणं दिव्ययोगिजनैकग्राह्यम्। तद्भक्तिमतां बहिर्यागे लेशतः विशेषतश्च पक्वानां मुनीनामन्तर्यागे च संभवति। पूर्वत्र यथा विधिसमिद्ध आहुतोऽग्निरुत्तरत्र मानसाहंकारनाशेनान्तःस्वस्वरूपेणाभिव्यक्तो जीवश्च दिव्यशक्तीरवतारयत इति रहस्यम्।

( ३ ) ऋ.—अग्निना रयिमश्नवत्पोषमेव दिवे दिवे।
यशसं वीरवत्तमम् ॥

भाष्यम्–अग्निना सुहुतेन सूपासितेन वा साधनभूतेन। दिवे दिवे दिने दिने। पोषमेव वर्धमानमेव। यशसं यशोयुक्तं पात्रेषु विनियोज्यत्वात्। वीरवत्तममतिशयेन वीरपुरुषोपेतम्। अत्र वीराश्च वीरत्वगुणयुक्ताः पुरुषाः पुत्रपौत्रादयो विवक्ष्यन्ते। भोगेन सूपयोगेन च ते धनेन सम्बध्यन्ते। इदं वीरत्वं यदविच्छिन्नाग्नित्वम्। न च नास्ति तस्य पदस्य विक्रान्तत्वमर्थः। रयिं धनम्। अश्नवत् प्राप्नोति। आराधक इति शेषः। किमग्न्याराधनस्य पुरुषनिर्व्यपेक्षमपूर्वजननद्वाराफलदातृत्वम्। आहोस्विदाराधनतुष्टात्फलमिति संशयः। तत्र प्रथमं पक्षं जैमिनीयाः श्रयन्ते। द्वितीयं बादरायणीयाः। उभयं च विधया कयाचिदविप्रतिषिद्धं मन्यते वासिष्ठः। न कर्मणि कर्मणि फलं दातुं पुरुषो व्यापृतो भवति। अस्य

कर्मेण एतत्फलमिति काश्चिन्नियतिमेव कृतवानिति विद्मः। लौकिकान्यपि कर्माणि नियतफलानि दृश्यन्ते। एवमेव वैदिकान्यपि कर्माणि भवितुमर्हन्ति। नियतिकारकत्वात्पुरुषात्फलोपपत्तिः। साक्षात्कर्मतः। नियतिबलजन्या फलदातृत्वशक्तिरेव कर्मणि ध्वस्तेऽप्यध्वस्ता मीमांसकैरपूर्वं संज्ञया व्यवह्रियते। किं सूर्यमण्डलान्तवर्ती पुरुषः कर्मफलानां नियतिं कृतवान्। उताहो वैश्वानरः। पूर्व एव भवतु। ननूक्तं स चाभिमानिनं भेददृष्ट्युपरञ्जितमुपासकमन्य इवानुगृह्णाति इति नायं विरोधः। नियतिवादश्चास्माकं प्रायोवादः। नास्माभिरुच्यते सर्वथाऽप्यनुग्राहक उत्तम इति। अपि तु विहितकर्मफलनियतिकारक एवेत्युक्तम्। उपासनातिशयादित एवानुग्रहः स्यात् न तत्र नियत्यपेक्षा।

( ४ ) ऋ.—अग्नेयं यज्ञमध्वरं विश्वतः परिभूरसि।
स इद्देवेषु गच्छति॥

भाष्यम्—हे अग्ने। यम्। अध्वरं हिंसारहितं यज्ञम्। विश्वतः सर्वतः हविरदन्। ज्वलनरूपः मन्त्रान् वदन् वाग्रूपः अन्नसन्तर्पणेन तृप्तिं गच्छन् जाठररूपः महेन्द्रप्रवणत्वेन स्वमूलस्वरूपं जानन् जीवरूपश्चेत्यर्थः परिभूर्व्याप्तः। असित्वम्। स इत्स एव यज्ञः। देवेषु। गच्छति। नान्य इत्यर्थः। यज्ञस्य सध्वरस्यापि सद्भावात्तन्निरसनायाध्वरविशेषणम्। सायनाचार्यस्तु सर्वोऽपि यज्ञः सध्वर इति मन्यमानोऽध्वरशब्दस्य राक्षसकृतं हिंसारहितमित्यर्थं वदति। न ह्यग्निना सर्वतः पालितं यज्ञं राक्षसादयो हिंसितुं प्रभवन्तीति तस्य कारणोपन्यासः। यदि सर्वोऽपि यज्ञोऽग्निना सर्वतः पालितः स्यात्तर्हि स इद्देवेषु गच्छतीति वचनमनर्थकम् न चेदस्माकमिव यज्ञविशेषवाचक एवाध्वर शब्दः प्रसज्येत। तदेतदनृजुनापथाऽर्थकथनं हिंसासहितानां यज्ञानां सर्वथा साधनायैव। अन्यच्चास्मिन्नर्थे विसंष्ठुलत्वम्। मन्त्रे यज्ञमध्वरं पूर्वमनूद्यानन्तरं तस्याग्निना विश्वतो व्याप्तत्वं पाक्षिकमुपन्यस्यते। पक्षान्तरे त्वध्वरो यज्ञोऽग्निना व्याप्तश्च न भवेत्सामग्रीलोपे। एवं स्थिते कथम-

ध्वरस्याग्नेर्विश्वतो व्याप्तश्च कार्यकारणभावः। अपर आह। न ध्वरोऽध्वरो यत्रेत्यध्वर इति। उष्ट्रस्य मुखमिव मुखं यस्य स उष्ट्रमुख इत्यादाविव मध्यमपदलोपसमासः। इदमपि हिंसापक्षपातविलसितम्। यत्र मध्यमपदे लुप्तेऽपि शेषपदार्थसामर्थ्यादेव पूर्णार्थस्फूर्तिस्तत्र मध्यमपदलोपयुक्तः। अत्रत्वन्यथैवार्थः स्फुरति। सच नानुपपन्नः। अनुपपन्न एव हिंसाश्रुतिविरोधादिति चेत्। तासां सध्वरेषु यज्ञेषु गतेर्नास्त्यनुपपत्तिः। इमं विषयमधिकृत्य दशममण्डलस्थे वासूक्ते दर्शने भूयो निपुणं विचारयिष्यामः। तदस्य विषयस्य युक्तं स्थलम्।

(५) ऋ.—अग्निर्होता कविक्रतुः सत्यश्चित्रश्रवस्तमः।
देवो देवेभिरागमत्॥

भाष्यम्—होता। कविक्रतुः क्रान्तप्रज्ञः। कविशब्दस्यात्र क्रान्तवचनत्वात्। क्रान्तकर्मा वा। क्रतुशब्दो हि प्रज्ञायां कर्मणि च पठ्यते निघण्टौ क्रान्तप्रज्ञत्वं जीवरूपत्वात्। क्रान्तकर्मत्वं ज्वलनरूपत्वाद्वाग्रूपत्वाच्च सत्य आत्मरूपत्वात्। चित्रश्रवस्तमः अतिशयेन चित्रकीर्तिः। अग्निर्देवः। देवेभिः सह आगमत् आगच्छतु। मनसा सान्निध्यं ददद्देवान्यजातामित्यर्थः। अडागमस्य छन्दसि वैकल्पिकत्वादगमदिति लुङि रूपम्। 'छन्दसि लुङ् लङ् लिट' इति लोडर्थेऽत्र लुङ्।

(६) ऋ.—यदङ्गदाशुषेत्वमग्ने भद्रं करिष्यसि।
तवेत्तत्सत्यमङ्गिरः॥

भाष्यम्—अङ्ग भोः अग्ने (त्वम्) दाशुषे समर्पकाय। यत्। भद्रं मङ्गलम्। करिष्यसि। अङ्गिरः अङ्गानां रस वाग्रूप हे अंगिनां रस आत्मरूप वा हे अंगिरोनामक ऋषित्वेनावतीर्णदेवेति वा। तत् तन्मङ्गलम्। तव+इत् तवैव। सत्यम् अवितथम्। इदमिति शेषः।

देवतात्मनाऽग्निना दत्तं कर्मफलं जीवात्माऽग्निर्भुनक्तीति देवजीवयोरभेदमेवं मन्त्रो रमणीयया भंग्या वदति।

कर्मस्वयं नश्वरमप्यपूर्वमुत्पाद्य तद्द्वारा यजमानाय फलप्रदं भवतीत्येकः पक्षः। आराधनरूपत्वात्कर्म देवतायाः प्रीतिं सम्पादयेत्। प्रीता च देवता यजमानाय फलप्रदा स्यात्। अलमपूर्वकल्पनेनेत्यन्यपक्षः। इममुत्तरं पक्षं यदङ्गेति मंत्रवर्णोऽनुगृह्णात्यत्राग्नेः फलप्रदत्वेनाभिधानात्।

(७) ऋ॰—उपत्वाऽग्ने दिवे दिवे दोषावस्तर्धियावयम्।
नमो भरन्त एमसि॥

(८) ऋ॰—राजन्तमध्वराणां गोपामृतस्य दीदिविम्।
वर्धमानं स्वेदमे॥

भाष्यम्–अग्ने। दिवे दिवे प्रतिदिनम्। दोषावस्तः तक्तंदिवम् बहिर्योगपक्षे सायं प्रातरिति लाक्षणिकोऽर्थः। अन्तर्योगपक्षे वाच्य एव विशालोऽर्थः। धिया बुद्ध्या। नमः नमस्कारम् बहिर्योगपक्षे त्वं महानुत्कृष्ट इति भावम्। अन्तर्योगपक्षे अन्वेषणमुद्रया मज्जनमुद्रया वा शिरसो हृदयायावनतिम्। भरन्तः बिभ्राणाः। वयम्। त्वा त्वाम्। उप समीपे। आ+इमसि आगच्छामः उपास्महे इत्यर्थः।

कीदृशं त्वाम्। राजन्तं प्रकाशमानम्। अध्वराणां हिंसारहितयज्ञानाम्। गोपां रक्षकम्। ऋतस्य सत्यस्यात्मस्वरूपस्य। दीदिविं प्रकाशकम्। स्वे स्वकीये। दमे बहिर्योगपक्षे ग्रहे। अन्तर्योगपक्षे शरीरे वर्धमानम् अक्षीणम्।

(९) ऋ॰—सनः पितेव सूनवेऽग्ने सूपायनो भव।
स च स्वा नः स्वस्तये।

भाष्यम्–हे अग्ने सत्वम्। नः सूनवे। पितेव। सूपायनः शोभनः पायनो भव। नः स्वस्तये अविनाशाय अमृतत्वायेति यावत्। स च स्वसमवेतो भव। स्वस्याप्रमादेनात्मरूपेग्नौ निष्ठात्मकः समवायो ह्यमृतत्वस्य हेतुः।

# "ईशोपनिषद्भाष्यम्"

अथ वाजसनेयिनां संहितोपनिषदं व्याख्यास्यामः ।

( १ ) मं०—ॐ ईशावास्यमिद ँ सर्वं यत्किञ्च जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम् ॥

भाष्यम्—जगत्यां प्रपञ्चे यत्किंच जगत् गतिमत् प्राणवदिति यावत् । तदिदं सर्वं ईशा सर्वशक्तेन परमात्मना वास्यमाच्छाद्यम् व्याप्तमित्यर्थः । तेन जगदंशेन व्यक्तेन परित्यक्तेन अविषयीकृतेनेति यावत् । भुञ्जीथाः अनुभव ईश्वरमिति शेषः । घटे कम्बुग्रीववत्त्वादेर्विकारांशस्य परित्यागे न मृदनुभवत् जगत्यां नामरूपादिविकारांशपरित्यागेन कारण-भूतसदनुभवः सिध्यतीति तात्पर्यम् । एवमनया त्रिपाद्या ज्ञानयोग उक्तः । उत्तरया पञ्चपाद्या कर्मयोगमाह । मागृधो मा कामं कृथाः धनं कस्यस्विन्न कस्यचिदित्यर्थः ॥

( २ ) मं०—कुर्वन्नेवेह कर्माणि जिजीविषेच्छत ँ समाः ।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥

भाष्यम्—इह लोके कर्माणि विहितानि कुर्वन्नेव शतं समाश्चिरं जिजीविषेत् जीवितुमिच्छेत् । शाश्वतमेवात्र (जीवितं) विवक्षितं कर्मयोगफल-भूतम् । एवं त्वयि नरे कर्म न लिप्यते संगाय न भवति । इतो मार्गा-दन्यथा नास्ति । निष्कामविहितकर्माचरणादन्यो मार्गो नास्ति कर्मलेपा-भावायेत्यर्थः ॥

( ३ ) मं०—असुर्या नाम ते लोकाः अन्धेन तमसा वृताः ।
ता ँ स्ते प्रेत्याभिगच्छन्ति, ये के चा[illegible]नो जनाः ॥

भाष्यम्—अन्धेन तमसावृताः ज्ञानशक्तिप्रविलयनात् असून् प्राणान् रान्त्य-पहरन्त्यपगतप्रज्ञान् कुर्वन्तीति प्रज्ञपर[illegible] ।

उच्यन्ते। तद्भिन्नत्वादसुर्या नाम ते लोकाः तेऽस्मद्दृष्टिपरोक्षाः लोकाः सन्तीति शेषः। ये के चात्महनः प्रकरणादात्मज्ञानशून्यत्वात् कर्मलेपत्वाच्च हेतुभ्यां शरीराद्विज्ञानमयस्य पृथक्करणाभावादन्तकाले आत्मनो हन्तारः। प्रज्ञापरिच्युतेः स्थावरसाम्यमिता इत्यर्थः। ते जनाः तान् पूर्वोक्तानसुर्यां [१] ल्लोकान् प्रेत्याभिगच्छन्ति। मूर्छितस्य यादृशो लोकास्तादृशो एषां लोका अभिगच्छन्ति इति विज्ञायते। ज्ञानयोगी त्विहैवात्मानमनुभवति। कर्मयोगी त्वलिप्तत्वादन्ततः प्राप्नोत्यमृतत्वम्। अपरस्त्वात्महा जुगुप्सितगतिर्भवतीति पर्यवसन्नं तात्पर्यम्।

( ४ ) म०—अनेजदेकं मनसो जवीयो, नैनद्देवा आप्नुवन्पूर्वमर्षत्।
तद्धावतोऽन्यानत्येति तिष्ठत्, तस्मिन्नपो मातरिश्वा दधाति॥

भाष्यम्—एकं सर्वोपादानत्वात् सर्वात्मकमिति केवलं किमपि वस्तु। अनेजत् स्वभावादचञ्चलम्। मनसो मनसः जवीयो वेगवत्तरं धर्मिभूतज्ञानद्वारा। पूर्वमर्षद्गच्छदेनद्देवा नाप्नुवन् पश्चान्न प्रापुः। तत्तिष्ठदचञ्चलमेव धावतोऽन्यानप्येति अतिलङ्घते। तस्मिन् मातरिश्वा तस्मिन् निजक्रियाशक्तिरूपो वायुरूपो अपः रसं सन्दधाति धारयति। यदलेपत्वात् सूक्ष्मातिसूक्ष्मत्वात् सर्वातिगत्वाच्चान्याभिर्विभूतिभिरस्पृश्यमासीत्तत्र मातरिश्वना निमित्तेन रसः सूक्ष्मो भूत्वा प्राणात्मको ध्रियमाणो योगं प्रापेत्यर्थम्।

( ५ ) म०—तदेजति तन्नैजति, तद्दूरे तद्वन्तिके।
तदन्तरस्य सर्वस्य, तदु सर्वस्यास्य बाह्यतः॥

भाष्यम्–तदेजति तन्नैजति प्रागुक्तरीत्या तद्दूरे सूर्यमण्डलान्तर्वर्तित्वात्। तदन्तिके हृदयान्तर्वर्तित्वात्। तदस्य सर्वस्यान्तर्न केवलं मण्डलहृदययोः तदस्य सर्वस्यान्तरः तत्+उ अस्य सर्वस्य बाह्यतः। पूर्णमित्युक्तं भवति। द्विरुक्तिः सर्वस्येति पादपूरणः।

( ६ ) म०—यस्तु सर्वाणि भूतान्यात्मन्येवानु पश्यति।
सर्वभूतेषु चात्मानं, ततो न विजुगुप्सुते॥

भाष्यम्—यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति। आत्मानं च सर्वभूतेषु।

ततोऽनुभवान्न विजुगुप्सते न कस्मिंश्चिद्वस्तुनि जुगुप्सावान् भवति। सर्वत्रात्मदर्शनात्। अस्यानुभवस्तु तेन त्यक्तेनेत्येव।

(७) म०—यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः॥

भाष्यम्—विजानत आत्मज्ञानिनो यस्मिन् दशाविशेषे सर्वाणि भूतान्यात्मैवाभूत् अपृथग्भावेन दर्शनात्। तत्र दशाविशेषे एकत्वमनुपश्यतः पुरुषस्य को मोहः कः शोकः। मोहशोकौ न स्यातामित्यर्थः। पूर्वत्र विकारांशत्यागेन ब्रह्मानुभूतिर्विवक्षिता। अत्र सर्वस्यापि ब्रह्मत्वेन दर्शनं विवक्षितम्। विकाराणां विषयत्वेन सेवा संसारः। विभूतित्वेनोपासनं तु पूर्णानुभूत्यप्रतिद्वंद्वीति।

(८) म०—स पर्यागाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम्।
कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः॥

भाष्यम्—स मुक्तः पुरुषोऽकायमशरीरं अव्रणमभेद्यत्वात् अस्नाविरमभौतिकत्वात्। शुद्धममलिनम्। अपापविद्धम् असंगत्वात्। शुक्रममृतं ज्योतिर्मयं दिव्यं वपुः पर्यागात् प्राप। कविर्मन्त्रदर्शी मनीषी मनस ईशः परिभूः सर्वात्मभावेन व्याप्तः स्वयम्भूरमृते दिव्ये वपुषि स्वयमाविर्भावात्। स पुरुषोऽर्थान् वेदितव्यानंशान् याथातथ्यतः सत्यतया शाश्वतीभ्यः समाभ्यः चिरं लोके जिज्ञासूनामर्थे स्थितये व्यदधाद्रचयामास। अभिदधावित्यर्थः। ऋषेरात्मान्वितैव परोक्षवद्देषोक्तिः। ईश्वराधिकारोऽयमित्येके।

(९) म०—अन्धं तमः प्रविशन्ति, येऽविद्यामुपासते।
ततो भूय इव ते तमो य उ विद्यायांरताः॥

भाष्यम्—ये अविद्यां केवलां निद्रामित्यर्थः। साह्यविद्या केवला यतस्तदा न किंचिद्विजानाति। ते अन्धंतमः प्रविशन्ति ज्ञानशून्यत्वात्। ये विद्यायां केवलायां त्रय्यादिविद्यायां लोकज्ञानात्मिकायां च रताः सक्ताः। ते ततः पूर्वोक्तात्तमसः भूय इव तमः प्रविशन्ति। विकाराविज्ञा-

नेनासमुच्चितं विज्ञानं कदाचिन्न ब्रह्मज्ञाने। भेदेन विकारग्रहः। अभेदेन ब्रह्मानुभव इति परस्परविरोधात्। नैवं विभूत्युपासनोच्छेदः; तत्र विकाराणां पृथक्त्वेनाग्रहणादविद्यैवेति। उः पादपूरणः।

( १० ) म०—अन्यदेवाहुर्विद्ययान्यदाहुरविद्यया।
इति शुश्रुम धीराणां, येनस्तद्विचचक्षिरे॥

भाष्यम्—विद्यया वक्ष्यमाणया अन्यदेव फलमाहुः। अविद्यया वक्ष्यमाणया अन्यत् फलमाहुः। येनस्तत् प्रकरणं विचचक्षिरे तेषां धीराणां सकाशादिति शेषः। इति पूर्वोक्तप्रकारेण शुश्रुम श्रुतवन्तः स्मः। यद्यप्यविद्याविद्ये निष्फले केवले तथापि ते प्रकारान्तरेण समुच्चिते फलदे इति भावः।

( ११ ) म०—विद्यां चाविद्यां च, यस्तद्वेदोभयँसह।
अविद्यया मृत्युं तीर्त्वा, विद्ययाऽमृतमश्नुते॥

भाष्यम्—विद्यां चाविद्यां चोभयं तत्सह समुच्चयेन यो वेद युगपद्विद्वानविद्वाँश्च भवतीत्यर्थः। कस्य विद्वान् कस्याविद्वानिति चेत्-ईश्वरस्य विद्वान् पार्थक्येन विकाराणामपरिज्ञानेन निमित्तेन मृत्युं प्रमादं तीर्त्वा विद्ययेश्वरानुभूत्या अमृतं शाश्वतं ब्रह्मभावेन स्थितिमश्नुते प्राप्नोति। जगद्यः पृथग्भावेन जानन्ननुभवति स ईश्वरं लक्षणतो जानन्नपि नैवानुभवति। अतएव केवलां विद्यान्यषेधत्। ईश्वरस्याविद्वान् प्रपञ्चमविजानन्नपि न समाधिस्थः। तं तु निद्रितमेव पश्यामः। अतः केवलमविद्यां निनिन्द। अविद्याविद्ययोः प्रागुक्तरीत्या समुच्चयः स समाधिरेव।

( १२ ) मं०—अन्धं तमः प्रविशन्ति येऽसम्भूतिमुपासते।
ततो भूय इव ते तमो य उ सम्भूत्याँरताः॥

भाष्यम्—ये असम्भूतिं संभूतिप्रतिद्वंद्विनं विनाशमुपासते केवलं म्रियन्त इति यावत्। ते अन्धं तमः प्रविशन्ति। ये संभूत्यां रताः जन्मप्राप्ता इति यावत्। ते ततो भूय इव तमः प्रविशन्ति। केवलेभ्यो मृतेभ्यो जाताः केवला अधिके तमसि प्रविष्टा इति भावः।

( १३ ) मं०—अन्यदेवाहुः सम्भवादन्यदाहुरसंभवात् ।
इति शुश्रुम धीराणां येनस्तद्विचचक्षिरे ॥

भाष्यम्–सम्भवादन्यदेव फलमाहुर्वक्ष्यमाणात् । असंभवाद्विनाशादन्यदेव फलमाहुर्वक्ष्यमाणात् । ये नः अस्मभ्यं तत् प्रकरणं विचचक्षिरे । तेषां धीराणां सकाशादिति शेषः । इति पूर्वोक्तप्रकारेण शुश्रुम श्रुतवन्तः स्मः । यद्यपि मरणजन्मनी केवले तमःप्रवेशहेतू तथापि प्रकारान्तरेण समुच्चिते फलदे इति भावः ।

तदेवाह—

( १४ ) मं०—संभूतिं च विनाशं च यस्तद्वेदोभयँ सह ।
विनाशेन मृत्युं तीर्त्वा संभूत्याऽमृतमश्नुते ॥

भाष्यम्–संभूतिं च विनाशं च तदुभयं सह समुच्चयेन यो वेदानुभवति युगपज्जातो मृतश्च भवतीत्यर्थः । अभिमानत्यागादत्र शरीरे मृतः । तपसाऽऽभ्यन्तरे ज्योतिषि तादात्म्याज्जात इति विवेकः । स च विनाशेन देहाभिमानत्यागेनात्र शरीरे मरणेन; मृत्युं प्रमादं तीर्त्वा । संभूत्याऽऽभ्यन्तरे ज्योतिषि तादात्म्याद्दिव्येन जन्मनाऽमृतं ब्रह्मभावमश्नुते प्राप्नोति ।

( १५ ) मं०—हिरण्मयेन पात्रेण, सत्यस्यापिहितं मुखम् ।
तत्त्वं पूषन्नपावृणु, सत्यधर्माय दृष्टये ॥

भाष्यम्–सत्यस्य प्रत्यगात्मनो मुखं भ्रूमण्डलवर्ति दिव्यमान्तरं चक्षुर्हिरण्मयेन पात्रेणाक्ष्णोरुपरिभागेन; पात्राकारत्वादेष भागः पात्रं हिरण्मयमितिरूपितः । अपि हि तमाच्छादितम् । अतो वयमन्तरन्धाः । पूषन् सूर्यमण्डलान्तर्वर्तिन् पुरुष त्वं तदपावृणु कुर्वपावृतम् । कस्मै प्रयोजनाय सत्यधर्माय प्रत्यगात्मधर्माय दृष्टये प्रतीच्यै दृष्टय इति भावः ।

(१६) मं०—पूषन्नेकर्षे यम सूर्य प्राजापत्य, व्यूह रश्मीन् समूह ।
तेजो यत्ते रूपं कल्याणतमं तत्ते पश्यामि सोऽसौ पुरुषः सोऽहमस्मि ॥

भाष्यम्–पूषन् पोषक एकर्षे सर्वमन्त्राणां द्रष्टः । यम नियामक प्राजापत्य प्रजापतेरखण्डात्मनो हिरण्यगर्भात्मनो मण्डले प्रादुर्भूत सूर्य भगवन्

व्यूह सन्नाह्य रश्मीन् किरणान्। समूह एकीकुरु। मम प्राणानां सर्वेषां सजातीयानामनुग्रहायेति भावः। रश्मयो हि प्राणा अध्यात्मम्। तेजस्तेजोमयं यत्ते कल्याणतमं रूपं तत्ते पश्यामि। योऽसौ असौ पुरुषः सोऽहमस्मि। साक्षात्कारादनन्तरमिदमुच्यते।

( १७ ) मं०—वायुरनिलममृतमथेदं, भस्मान्त ँ शरीरम्।
ॐ क्रतो स्मर कृत ँ स्मर, क्रतो स्मर कृत ँ स्मर॥

भाष्यम्—वायुरनिलं विलयनरहितममृतं वस्तु। सङ्गरहितम् इति यावत्। अथेदं शरीरं भस्मान्तं नश्वरमित्यर्थः। मातरिश्वन एवैषा स्तुतिर्भवति। ॐ प्रणवरूप क्रतो सर्वक्रियाकारिन् वायो स्मर मामिति शेषः। कृतं मया कृतं पुण्यं स्मर। वाक्यस्य द्विर्वचनं प्रार्थनायामादरातिशयार्थम्।

( १८ ) मं०—अग्ने नय सुपथा राये अस्मान्, विश्वानि देववयुनानि विद्वान्।
युयोध्यस्मज्जुहुराणमेनोभूयिष्ठां, ते नम उक्तिं विधेम॥

भाष्यम्—द्युस्थानमन्तरिक्षस्थानं च दैवते प्रार्थिते। अथ पृथिवीस्थानं प्रार्थयते। अग्ने देव अस्मान् राये सम्पदे विश्वानि सर्वाणि वयुनानि स्थानानि विद्वान् त्वं सुपथा शोभनेन मार्गेण नय। अस्मत् मत्तो जुहुराणं लज्जाकरमेनो युयोधि पृथक्कुरु। ते तुभ्यं भूयिष्ठां नम उक्तिं विधेम। यदीशोपक्रम्य सूर्यवायुवैश्वानराणां स्तुत्योपसंहरति तत् ज्ञापयत्युपनिषत् ईशस्तिस्र एता देवता विभूतय इति विभूतय इति।

अत्रायं श्लोको भवति—

( १९ ) मं०—संहितान्तानुवाकोऽयं, गोप्यो वाजसनेयिनाम्।
भाष्येण लघुनानेन, दीपेनेव प्रकाशितः॥



# गोत्रप्रवरनिर्णयः

## "प्रथमोऽध्यायः"

१—अथातो गोत्राणि प्रवरांश्च व्याख्यास्यामः ।

२—भृगोरंगिरसोऽत्रेर्विश्वामित्रस्य कश्यपस्य वासिष्ठस्यागस्त्यस्य च सप्त कुलानि भवन्ति ।

३—गोत्राणि चात्रिप्रभृतीनां पंचानां कुलानि नामान्तरेण ।

४—भृगोर्महाकुले जमदग्नेः शाखाकुलमेकं गोत्रम् ।

५—अंगिरसो गोतमभरद्वाजयोः शाखाकुले द्वे गोत्रे ।

६—एवं गोत्राणामष्टकमेव प्राचां शास्त्रेषु ।

७—व्यवहारे तु सर्वाण्यपि शाखाकुलानि गोत्राणि ।

८—यानि सप्तानामपि महाकुलेषु ।

९—कुलाष्टक एव गोत्रपदं पारिभाषिकम् ।

१०—सर्वत्र तु रूढं लोकप्रामाण्याद्ग्रन्थेषु प्रयोगबाहुल्याच्च ।

११—सगोत्रं नोद्वहेदित्यत्र गोत्रपदं पारिभाषिकं चेत्कुत्सानां हरितानां च विवाहप्रसंगः ।

१२—अंगिरसं विना द्वितीयतृतीययोः प्रवरयोस्तेषां भिन्नाभिन्नत्वात् ।

१३—यथारुढि चेदयं दोषो भिन्नगोत्रव्यवहारादिति चेत् ।

१४—न गणैक्यव्यवहारात् ।

१५—गणैक्यं गोत्रैक्यान्नातिरिच्यते ।

१६—भेदेन व्यवहारोन्तर्गणसापेक्षो यथा भवतां वसिष्ठगोत्रे कौडिन्य-पराशरगोत्रयोः ।

१७—यथारूढि चेत्कपीनां भरद्वाजानां च विवाहप्रसंगः ।

१८—अंगिरसं विना द्वितीयतृतीययोः प्रवरयोस्तेषां भिन्नभिन्नत्वात् ।

१९—अस्तु यथा परिभाषम् ।

२०—समानार्षत्वादेव कुत्सानां हरितानां च विवाहः ।

२१—मांधातोभयेषां समानः ।

२२—सोऽगिरसः स्थाने हरितानां विकल्पे नहि पठ्यते ।

२३—वैकल्पिकेनर्षिणा च समानार्षत्वं सम्भवेदित्युक्तं भवति ।

२४—अष्टानामन्यतमस्य प्रवरत्वेन दर्शनगोत्रलिंगम् ।

२५—तद्गोत्रस्तद्वल्लिंगविचारे ।

२६—द्विलिंगं मिश्रगोत्रम् ।

२७—मिश्रगोत्रा उभयेषां च सगोत्राः ।

२८—गोत्राष्टकादन्यत्र भृगुमंगिरसं च विना प्रवरस्यैकस्य वा साम्ये समानार्षाः ।

२९—गोत्रतदितरयोश्चैवं समानार्षत्वम् ।

३०—गोत्रतदितरलिंगस्य च मिश्रगोत्राख्या ।

३१—तद्वंतः पूर्वेषां सगोत्रा अपरेषां समानार्षाः ।

३२—शुद्धभृगवः शुद्धागिंरसश्चेत्यगोत्रलक्षणद्वेधा ।

३३—सगोत्राः समानार्षाश्चैकवंशा उच्येरन् ।

३४—एकवंशानोद्वहेत् ।

---

## "अथ द्वितीयोऽध्यायः"

१—च्यवनायस्कामित्रयवोवेनाः शुनकाश्चेति पंचधा भृगवः ।

२—यस्कादयश्चत्वारः शुद्धाः ।

३—गोत्रलक्षणाः शुद्धाश्चेति द्वेधा च्यवनाः ।

४—तेषामेकवंशत्वसमानार्षत्वात् ।

५—तेषु जमदग्नयः पूर्वे ।

६—आर्ष्टिषेणा अपरे ।

७—गोतमा भरद्वाजा हरिताः कण्वारथीतराविष्णुवृद्धा मुद्गलाश्चेत्यं-गिरसः सप्तधा ।

८—तेषूभये पूर्वे गोत्रलक्षणाः ।

९—पश्चेतरे शुद्धाः ।

१०—अत्रयस्त्रयोदशो ब्राह्मणवंशः ।

११—विश्वामित्राश्चतुर्दशः ।

१२—कश्यपाः पंचदशः ।

१३—वसिष्ठाः षोडशः ।

१४—अगस्तयः सप्तदशः ।

१५—एतावत्येव ब्राह्मणवंशसंख्या ।

१६—संकृतयोवसिष्ठेष्वेवांतर्भवंतिशुद्धांगिरसश्च केवलं संज्ञया ।

१७—शुद्धांगिरोलिंगमिश्रत्वात्तद्गोत्रमिश्रमित्येके ।

१८—नेति वासिष्ठो लिंगस्य गणान्तरासंबद्धत्वात् ।

१९-गोत्रकृतमुल्लंघ्य ततोऽपि प्राचीनस्य कूटस्थस्य प्रवरणं केवलं तत्पूजायैनतदीयवंशशाखान्तरमिश्रत्वद्योतनाय ।

२०—भृग्वंगिरसौद्वावेव हि सर्वेषां प्राचीनतमौ कूटस्थौ ।

२१—दत्तमित्रयवोमित्रयूनां च्यवनानां च मिश्रो वंशः ।

२२—शौङ्गशैशिरयः कताः कपिलाश्च भरद्वाजानां विश्वामित्राणां च ।

२३—धनंजया विश्वामित्राणामत्रीणां च ।

२४—जतूकर्णा अत्रीणां वसिष्ठानां च ।

२५—लौगाक्षयो वसिष्ठानां कश्यपानां च ।

२६—अहरे केषां नक्तं परेषां क्रियासु ।

२७—मिश्रगोत्राणां ताभ्यामिव तदन्यतरमिश्रगोत्रेणापि भागतः सगोत्रत्वमित्येके ।

# "अथ तृतीयोऽध्यायः"

१—वत्साबिदाश्चेति जमदग्ने गोत्रे द्वौ गणौ ।

२—भृगुच्यवनोऽप्नुवान् और्वो जमदग्निश्च पंच प्रवरा वत्सानां वत्सो वा भृगुस्थाने ।

३—आद्यास्त्रय एव वा ।

४—बिदानां जमदग्नेः स्थानेबिदः ।

५—भृगुरौर्वो जमदग्निश्चेति त्रय एव वोभयेषाम् ।

६—वत्सपुरोधसौवैजमथिता भार्गवा मौन भार्गवा वेद विश्वज्योतिषः शाठरमाठराश्चेत्यन्ये षड्गणाश्च जमदग्निषु कैश्चित्पठ्यंते ।

७—भृगुश्च्यवनोऽप्नुवानो वत्सपुरोधाश्चेति पंचप्रवरावत्सपुरोधसाम् ।

८—वत्सपुरोधसोः स्थाने विजमथितौ बैजमथितानाम् ।

९—भृगुश्च्यवनोऽप्नुवान और्वो भार्गवश्चेति पंचभार्गवाणाम् ।

१०—भार्गवस्य स्थाने मौनभार्गवो मौनभार्गवाणाम् ।

११—मौनभार्गव एव पूर्वैर्भार्गव उच्यन्ते ।

१२—भृगुर्वेदो विश्वज्योतिश्च वेद विश्वज्योतिषाम् ।

१३—भृगुः शठरमठरश्च शाठरमाठराणाम् ।

१४—काश्यपो मठरोऽन्य इति जमदग्नयः ।

१५—आर्ष्टिषेणानां भृगुच्यवनोऽप्नुवान आर्ष्टिषेणोऽनूपश्च पंच प्रवराः ।

१६—च्यवनाप्नुवानौ विना त्रय एव वा ।

१७—इति च्यवनाः ।

१८—भृगुर्वीतहव्यः सवेदाश्च त्रयः प्रवरा यस्कानाम् ।

१९—इमेवा धूलावा भण्यन्ते ।

२०—भृगुर्दिवोदासो बध्यश्वश्च त्रयो मित्रयूनाम् ।

२१—व्यत्ययेन वा द्वितीयतृतीयौ ।

२२—व्र्यश्च एक एव वा ।

२३—एते वध्र्यश्वा वा भण्यंते ।

२४—भृगुर्वेनः पृथुश्च वेनानां त्रयः ।

२५—एते पार्था वा श्विता वा भण्यन्ते ।

२६—भृगुः शुनहोत्रो गृत्समदश्च त्रयः शुनकानाम् ।

२७—भृगुगृत्समदौ द्वौ वा ।

२८—गृत्समद एको वा ।

२९—शुनक एको वा ।

३०—एते गृत्समदा वा भण्यन्ते ।

३१—इति भृगवः पंच ।

३२—अथ गोतमेषु द्वादशगणाः ।

३३—अंगिरा आयास्यो गोतमश्च त्रयोऽयास्यानाम् ।

३४—शुद्धगोतमा वै भण्यन्ते ।

३५—अंगिरा गोतमः शरद्वांश्च शरद्वताम् ।

३६—अंगिरा उचथ्यः कक्षीवान्गोतमः कुमंडश्च पंच कुमंडानाम् ।

३७—गोतम उशिक्कक्षीवानिति वा तृतीयादयः ।

३८—उशिमृषिकाकक्षीवतो माता ।

३९—अंगिरा अयास्य उशिग्गौतमः कक्षीवांश्च वा ।

४०—अंगिरा उशिक्कक्षीवानिति त्रय एव वा ।

४१—अत्र द्वितीय उचथ्यो वा ।

४२—उचथ्यो गोतमः कुमण्डश्च वा !

४३—अंगिरा उचथ्यः कक्षीवान्गोतमो दीर्घतमाश्च पंच दीर्घतमसाम् ।

४४—द्वितीयतृतीयो विना त्रय एव वा ।

४५—अंगिरा गोतमः करेणुपालश्च त्रयः करेणुपालानाम् ।

४६—अंगिरा गोतमो वामदेवश्च वामदेवानाम् ।

४७—बृहदुक्थो वा द्वितीयः ।

४८—अंगिरा वामदेवो गौतमश्च वा ।

४९—अंगिरा गोतम उशना चोशनसाम् ।

५०—अत्रोशना भार्गवादन्यः ।

५१—अङ्गिरारहुगणो गौतमश्च रहुगणानाम् ।

५२—अंगिराः सोमराजो गोतमश्च सोमराजकानाम् ।

५३—अंगिराबृहदुक्थो गोतमश्च बृहदुक्थानाम् ।

५४—अंगिरा उचथ्यो गोतमश्चोचथ्यानाम् ।

५५—अंगिरा राघवो गोतमो राघवाणाम् ।

५६—सर्वत्रोचथ्यमुतथ्यपठंत्येके ।

५७—इति गोतमाः ।

५८—अथ भरद्वाजेषु पंचगणाः ।

५९—अंगिरा बृहस्पतिर्भरद्वाजश्च शुद्धभरद्वाजानाम् ।

६०—शिनिगर्गाभ्यांसहृते पंचगर्गाणाम् ।

६१—अंगिराः शिनिर्गर्गस्त्रयो वा ।

६२—व्यत्ययेन वा द्वितीयतृतीयौ ।

६३—अंगिरास्तित्तिरिःकविभूर्वा ।

६४—अंगिराबृहस्पतिभरद्वाजो वंदनोमतवचाश्च पंचऋक्षाणाम् ।

६५—द्वितीयतृतीयौ विना त्रय एव वा ।

६६—अंगिरा अमहीयुरुरुक्षयश्च कपीनाम् ।

६७—अंगिरा बृहस्पतिर्भरद्वाजोवर आत्मभूश्च पंचात्मभुवाम् ।

६८—इति भरद्वाजाः ।

६९—शुद्धहरिताः कुत्साश्च द्वेधा हरिताः ।

७०—अंगिरा अंबरीषो युवनश्वश्च शुद्धहरितानाम् ।

७१—मांधाता वा प्रथमः ।

७२—तृतीयो वा ।

७३—अंगिरा मांधाता कुत्सश्च कुत्सानाम् ।

७४—अंगिरा अजमीढः कण्वश्च कण्वानाम् ।

७५—घोरो वा द्वितीयः ।

७६—अंगिरा विरूपो रथीतरश्च रथीतराणाम् ।
७७—पृषदश्वो वा तृतीयः ।
७८—द्वितीयतृतीयौ वा पृषदश्वविरूपौ ।
७९—तयोः पूर्वोऽष्टादंष्ट्रो वा ।
८०—अंगिराः पुरुकुत्सस्त्रसदस्युश्च विष्णुवृद्धानाम् ।
८१—पुरुकुत्साः शठमर्षणा वै ते भण्यन्ते ।
८२—व्यत्ययेन वा द्वितीयतृतीयौ ।
८३—अंगिराभर्ग्याश्वोमुद्गलश्च मुद्गलानाम् ।
८४—तार्क्ष्यो वा प्रथमः ।
८५—द्वितीयो वा ।
८६—तवो वा द्वितीयः ।
८७—इत्यंगिरसः सप्त ।
८८—अथ षड् त्रिषु गणाः ।
८९—अत्रिरर्चनानाः श्यावाश्वश्च शुद्धात्रीणाम् ।
९०—तृतीयो गविष्ठिरो गविष्ठिराणाम् ।
९१—वद्धुतको वद्धुतकानाम् ।
९२—पूर्वातिथिः पूर्वातिथीनाम् ।
९३—अतिथिरतिथीनां गविष्ठिरो वा ।
९४—द्वितीयः सुमंगलः सुमंगलानाम् ।
९५—अतिथीनामिव वा ।
९६—अत्रिर्वामरथः पुत्रिका च वामरथानाम् ।
९७—अतिथीनामिव वा ।
९८—शुद्धात्रीणामिव वा ।
९९—इमे त्रिवसिष्ठविश्वामित्रगोत्रलिंगा इत्येके ।
१००—अत्रीणामेव सप्तमो गण इति वासिष्ठः ।
१०१—इत्यत्रयः ।
१०२—अथ विश्वामित्रेष्वष्टादशगणाः ।
१०३—विश्वामित्रोऽष्ट कोलोहितश्च लोहितानां त्रयः ।
१०४—व्यत्ययेन वा द्वितीयतृतीयौ ।
१०५—मधुच्छन्दा वा तृतीयः केषांचित्तेषु ।

१०६—अष्टकमधुच्छन्दसौ वा द्वितीयतृतीयौ ।
१०७—विश्वामित्रो गाथीरेणुश्च रूक्षकाणाम् ।
१०८—अष्टकरेणू वा द्वितीयतृतीयौ केषांचित्तेषु ।
१०९—विश्वामित्रो देवश्रवादेवरातश्च कामकायनानाम् ।
११०—द्वावेव वा द्वितीयं वा प्रथमं वा विना ।
१११—विश्वामित्रो मधुच्छंदा अचश्चाजानां त्रयः ।
११२—विश्वामित्रोऽधमर्षणः कुशिकश्च कुशिकानाम् ।
११३—विश्वामित्रः सहुलोमहुलश्च सहुलानाम् ।
११४—विश्वामित्रो गाथीवेणुश्च वेणूनाम् ।
११५—विश्वामित्रोऽश्मरथोवाघुलश्चाश्मरथानाम् ।
११६—विश्वामित्रोमधुच्छन्दारोहिणश्च रोहिणानाम् ।
११७—विश्वामित्रो देवरात उद्लश्च देवरातानाम् ।
११८—पूरणो वा तृतीयः ।
११९—विश्वामित्रः सालंकायनः कुशिकश्च सालंकायनानाम् ।
१२०—विश्वामित्रः पूरणश्च द्वौ पूरणानाम् ।
१२१—द्वितीय इन्द्रकौशिक इन्द्रकौशिकानाम् ।
१२२—हिरण्यरेता हिरण्यरेतसाम् ।
१२३—सुबर्णरेताः सुवर्णरेतसाम् ।
१२४—कपोतरेताः कपोतरेतसाम् ।
१२५—घृतकौशिको घृतकौशिकानाम् ।
१२६—कथकः कथकानाम् ।
१२७—इति विश्वामित्राः
१२८—अथ कश्यपेषु त्रयो गणाः ।
१२९—कश्यपोऽवत्सारो निध्रुविश्च नैध्रुवकाश्यपानाम् ।
१३०—असितो वा तृतीयः ।
१३१—रेभो रेभाणाम् ।
१३२—शंडिलः शंडिलानाम् ।
१३३—देवलो वा ।
१३४—देवलासितौ वा द्वितीयतृतीयौ ।

१३५—द्वावेव वातौ शंडिलोसितो देवल इति वा ।

१३६—कश्यपोऽवत्सारो निध्रुवीरेभः शांडिलश्च पंच वा ।

१३७—कश्यपोऽवत्सारो निध्रुवीरेभोरैभ्यःशं डिलः शांडिल्यश्च सप्त वा ।

१३८—निध्रुविः कश्यपो मठरश्च माठरकाश्यपानां स चतुर्थो गणः ।

१३९—इति कश्यपाः ।

१४०—अथ वसिष्ठेषु चत्वारो गणाः ।

१४१—वसिष्ठ एकः शुद्धवसिष्ठानाम् ।

१४२—वसिष्ठौ मित्रावरुणौ कौडिन्यश्च त्रयः कुण्डिनानाम् ।

१४३—अत्र द्वाविवेकवत् ।

१४४—वसिष्ठ इन्द्रः प्रमद आभरद्वसुश्चोपमन्यूनाम् ।

१४५—वसिष्ठः शक्तिः पराशरश्च पराशराणाम् ।

१४६—अंगिरागौरवीतिः संकृतिश्च संकृतीनाम् ।

१४७—शक्तिर्वा प्रथमः ।

१४८—अत्र व्यत्ययेन वा द्वितीयतृतीयौ ।

१४९—एव पंचमो गणो वसिष्ठेषु ।

१५०—एषां संज्ञया शुद्धांगिरस्त्वं प्रागुक्तम् ।

१५१—इति वसिष्ठाः ।

१५२—अथागस्तिषु दशगणाः ।

१५३—अगस्त्य एकः शुद्धागस्तीनाम ।

१५४—अगस्त्यो महेन्द्रो मयो भूश्च त्रयो वा ।

१५५—अगस्त्यः पूर्णमासः पारणश्च पूर्णमासानाम् ।

१५६—अगस्त्यो हेमवर्चिर्हेमोदकश्च वामोदकानाम् ।

१५७—अगस्त्यः पिनायकपाणिकश्च पाणिकानाम् ।

१५८—अगस्त्यो दृढच्युत इध्मवाहश्चेध्मवाहानाम् ।

१५९—तृतीयः स्ततंभवाहः स्तंभवाहानाम् ।

१६०—सोमवाहः सोमवाहानाम् ।

१६१—यज्ञवाहो यज्ञवाहानाम् ।

१६२—दर्भवाहो दर्भवाहानाम् ।

१६३—सारवाहः सारवाहानाम् ।

१६४—इत्यागस्त्यः ।

---

# "अथ चतुर्थोऽध्यायः"

१—अथ मिश्रवंशाः ।

२—भृगुश्च्यवनोदिवोदासश्चदत्तमित्रयूनाम् ।

३—अङ्गिराबृहस्पतिर्भरद्वाजः शुङ्गो वैश्वामित्रः शिशिरश्च पञ्च शौङ्गशैशिरीणाम् ।

४—कताक्षीलौ चतुर्थपञ्चमौ चेत्ते कता उच्येरन् ।

५—अङ्गिराः कतोऽक्षीलश्च त्रयो वा कतानाम् ।

६—विश्वामित्रो वा प्रथमः ।

७—अङ्गिरामतावचाविश्वामित्रश्च कपिलानाम् ।

८—शौङ्गकौशिरिप्रभृतयो भरद्वाजविश्वामित्रोभयगोत्रलिङ्गाः ।

९—कतेषु सविश्वामित्राविश्वामित्रा एवेत्येके ।

१०—विश्वामित्रोमधुच्छन्दाधनञ्जयश्च धनञ्जयानाम् ।

११—अत्रिर्वा प्रथमः ।

१२—इमे च सविश्वामित्रा विश्वामित्रा एवेत्येके ।

१३—वसिष्ठोऽत्रिर्जतूकर्णश्च जतूकर्णानाम् ।

१४—कश्यपोऽवत्सारो वसिष्ठश्च लौगाक्षीणाम् ।

१५—इति पञ्च मिश्रवंशाः ।

१६—ऋषिरण्वप्रत्ययान्तोहोतुर्वाक्ये ।

१७—मतुबन्तोध्वर्योः ।

१८—व्यत्यये न च सर्वत्र प्रवरणम् ।

१९—सोयं सप्तोनपादसहस्रेण सूत्राणां गोत्रप्रवरनिर्णयो भवति ।

इति श्रीभगवन्महर्षिरमणान्तेवासिनो वासिष्ठस्य नरसिंहसूनोः गणपतेः कृतिः गोत्रप्रवरनिर्णयः समाप्तः ।

---

# "वासिष्ठकामसूत्रम्"

## "प्रथमोऽध्यायः"

१—अथातः कामतंत्रं व्याख्यास्यामः ।

२—अनन्यपूर्वा पत्नी पूनर्भूर्वेश्या परकीया चेति चतस्रो नायिका इत्याचार्याः ।

३—पूर्वाधर्म्यो द्वितीया तृतीया च न धर्म्येनापि निषिद्धे चतुर्थी निषिद्धेति चाहुः ।

४—तृतीया च निषिद्धा बह्वनर्थमूलत्वादिति वासिष्ठः ।

५—निषिद्धयोर्नायिकाभासत्वाद्द्वे एव नायिके वासिष्ठस्य मतेन ।

६—तयोश्च भेदो धर्मशास्त्रकृत एव न कामशास्त्रकृत इतिपुत्रफलस्य पत्नीत्वस्य तुल्यत्वादविशेषाच्च भोगे ।

७—पुंसश्च द्वितीयो विवाहो न धर्म्यो नापि निषिद्धः ।

८—अग्निहोत्रादिप्रयोजनत्वाद्धर्म्य एवेति चेत्तुल्यं पुनर्भ्वा ।

९—धर्म्यत्वं चोभयोः पूर्वविवाहस्यावश्यकर्तव्यं नादृष्टजनकत्वम् ।

१०—तस्यापि नियममात्रत्वादपापत्वमेव हि न पुण्यविशेषत्वम् ।

११—एवमपि तस्यावश्यकर्तव्यत्वं सङ्कव्यवस्थार्थत्वात् ।

१२—अत्यन्तविरक्तयोर्नैषोऽपि सर्वव्यवस्थानां प्रबलवैराग्यावधिकत्वात् ।

१३—एकैस्यैकैव नायिका शस्यते ।

१४—तथैक एवैकस्याः ।

१५—पुंसो बहुपत्नीकत्वं धर्मशास्त्रानिषिद्धमपि न कस्याश्चिदपि सुखायेति कामागमासम्मतम् ।

१६—स्त्री पुंसयोरुभयोश्च सुखाय कामशास्त्रं प्रवर्तत इत्याचार्याः।

१७—वस्तुतो नारीणां सुखोत्पादनायेति वासिष्ठः ।

१८—पुंसां प्रतारणाय रागशून्याभिरपि गणिकाभिर्यदिदमुपयुज्यते तदन्यत् ।

१९—अधीतकामागमः पुरुषः शास्त्रीयैर्विधिभिर्नारीं रञ्जयेत् ।

२०—अशास्त्रीयेणापि रतेन पुरुषस्तृप्तिं यायान्न तथा नारी ।

२१—ममेयं तर्पितेति तृप्तिः पुरुषस्याधिका शास्त्रीये ।

२२—सात्वन्या कामसुखात् ।

२३—रचनार्यास्तर्पणं पुंसो धर्मं मन्यते वासिष्ठः ।

२४—न केवलं सन्तोषकृदपि तु प्रेमवर्धकं शीलस्थापकं श्रेष्ठापत्यप्रदं च तन्नारीणाम् ।

२५—तत्र पुमानपि भागस्वामी स्यात् ।

---

## "द्वितीयोऽध्यायः"

१—स्त्रियापि कामशास्त्रमध्येतव्यं दंपतिलीलानां क्रीडासधर्मत्वाद् उभयोश्च हि तद्विज्ञानमावश्यकम् ।

२—प्रयोक्ता प्रायः पुमान् ।

३—केषुचित्प्रयोगेषु प्रतिग्रहणमात्रं नार्याः ।

४—केषुचित्प्रतिप्रयोगाः ।

५—केचिदेव नारीप्रयोगः ।

६—सम्बाधः साधनं चेति स्त्रीपुंसयोः प्रजनननामनी ।

७—उभयोश्च विसृष्टिसुखं भाव उच्यते ।

८—पुरुषस्येव स्याद्भावो न स्त्रीणामिति श्वेतकेतुः ।

९—भावं विनापि तासां सुखं कण्डूत्यपनोदनजन्यम् ।

१०—उपद्रव्यैरपि तस्य साध्यत्वान्नैव स्त्रीणां पुरुषापेक्षेति चेत्तत्राभिमानिकस्तु स्वस्या भाव इति तासां पुरुषापेक्षा ।

११—आलिंगनचुम्बनोपसुप्तादिजं स्पर्शसुखमाभिमानिकम् ।

१२—नारी च भावमधिगच्छेदिति बाभ्रव्यः ।

१३—रतान्ते पुरुषस्य भावो रतारभात्प्रभृति यावद्रससमाप्ति नार्याः ।

१४—सकृदेव क्षरेत्पुरुषस्य वीर्यं नार्यास्तु संतत सकाल इति विशेषः ।

१५—पुरुषस्येव नार्या अपि संपूर्णा धातुक्षरणा द्विरामाभीप्सा ।

१६—प्रायो नार्याः संपूर्णधातुक्षरणात्प्रागेव पुरुषस्य क्षरेद्धातुः ।

१७—नार्यास्तु श्रमादेव विरामाभीप्सा श्वेतकेतोर्मतेन ।

१८—भावप्राप्तिश्चास्ति कण्डूतश्चापनुद्यत इति नार्या उभयथाप्यस्ति सुखमिति वासिष्ठः ।

१९—धातुक्षयादेव पूर्णा विरामाभीप्सा नार्याः ।

२०—श्रमात्तु कतिपयक्षणविश्रान्त्यपेक्षैव न विरामाभीप्सा ।

२१—रतारम्भात्प्रभृति स्त्रीणां धातुक्षरणमिति न सार्वत्रिकम् ।

२२—यथा विध्यालिंगनचुंबनादिभिरुपचारैः सन्धुक्षितायां रागाविष्टायां सम्यगुपसृप्तायां सारम्भात्प्रभृति भावप्राप्तिर्न सर्वस्याम् ।

२३—कामजलादन्य एव स्त्रीणां धातुः ।

२४—समञ्जनः सारः ।

२५—रागेण तस्मिन्नन्तर्मथ्यमाने यः शारीर ऊष्मा जायते ततो जातः संबाधस्यान्तर्विलक्षणः स्वेदः कामजलम् ।

२६—तदुदय एव भावप्राप्तिश्चेन्नार्या इष्टपुरुषदर्शनेपि भावप्राप्तिप्रसङ्गः प्रमोद्रेकमात्रेणापि तदुदयात् ।

२७—इच्छाकारणमेव कामजलागमो न सुखविशेष इति निर्विवादो विषयः ।

२८—आर्तवाच्चान्यः स धातुः ।

२९—तद्युक्तमेवार्तवं पुरुषस्य वीर्यमाकृष्य गर्भधारणक्षमं स्यात् ।

३०—कण्डूतिकारिणः सूक्ष्माः क्रिमयः कामजल एव न सर्वदा संबाधस्यान्तः ।

३१—अन्यथा नित्येच्छाप्रसङ्गः ।



# "तृतीयोऽध्यायः"

१—आभिमानिकं सुखं स्त्रीपुंसयोस्तुल्यम् ।

२—तदभियुज्यमाना नार्यभिगच्छेदभियुञ्जन्पुरुष इति प्रायोवादः ।

३—आलिङ्गनादीनां प्रतिग्रहणमभियुज्यमानत्वम् ।

४—पयोक्तृत्वमभियोगः ।

५—विपर्ययेणाप्यभिमानिकसुखलाभो दृश्यते ।

६—अभिमानिकस्य सुखस्य तुल्यत्वेपिरते पुरुषान्नार्याः सुख-विशिष्यते कण्डूत्यपमानोदनवशाद्भावस्य च सातत्यात् ।

७—स्त्रोपुंसयोर्भावस्य तुल्यत्वेपि सातत्यक्षणिकत्वाभ्यां विशेषः ।

८—पुमान्रते नारी भावायैव प्रयतेत नात्मनो भावाय ।

९—पूर्वस्य यत्नसाध्यत्वादुत्तरस्य सुलभसाध्यत्वात् ।

१०—यत्रोभयोः पूर्णा तृप्तिस्तत्सुरतम् ।

११—यत्र पुरुषस्य पूर्णा तृप्तिर्नार्यास्तृप्तिर्मध्यमा तद्रतम् ।

१२—अल्पा चेद्दूरतम् ।

१३—यत्र नार्याः पूर्णा तृप्तिर्न पुरुषस्य तरतयोगः ।

१४—प्रथमचरमावुत्तमौ ।

१५—द्वितीयो मध्यमः ।

१६—तृतीयोऽधमः ।



# "चतुर्थोऽध्यायः"

१—शशोवृषोऽश्व इत्युत्तरोत्तरोन्नतसाधनास्त्रिस्रः पुरुषजातयो मृगी बडवा हस्तिनीत्युत्तरोत्तरगभीरसम्बाधस्तिस्रे नारीजातय इति प्राञ्चः।

२—शशम्वृषभोर्मध्ये हरिणस्य मृगीबडवयोर्मध्ये धेनोश्च सत्त्वाश्च-तस्रो जातय इति तु परे।

३—मृगीधेनुबडबाः पद्मिनीचित्रिणीशंखिन्यो नामान्तरेण।

४—परिणाहश्चोत्तरोत्तराधिको जातीनाम्।

५—गुणैर्जातयः पूर्वपूर्वं श्रेष्ठाः।

६—उत्तरोत्तरं रते चण्डाः।

७—प्रकृत्यातिर्यग्जन्तुष्वायामे न स्त्रीजातेः पुञ्जातिरधिकेति मृगीशशयोर्धेनुहरिणयोर्बडबावृषयोर्हस्तिन्यश्वयोश्च तुल्य-जातित्वकथनम्।

८—स्त्रीपुंसयोस्तुल्यजातित्वे समं रतम्।

९—तच्चतुर्धा तुल्यद्वन्द्वयोश्च तुष्ट्वात्।

१०—एकावरा चेन्नारीजातिरुच्चं रतम्।

११—तन्त्रेधा तादृशविषमद्वन्द्वयोस्त्रित्वात्।

१२—द्व्यवराचेदुच्चतरम्।

१३—तद्द्वेधा तादृशविषमद्वन्द्वयोर्द्वित्वात्।

१४—त्र्यवराचेरुच्यताम्।

१५—तदेकं तादृशविषमद्वन्द्वस्यैकत्वात्।

१६—एकाधिका चेन्नारोजातिर्नीचं रतम्।

१७—द्व्यधिका चेन्नीचतरम्।

१८—त्र्यधिका चेन्नीचतमम्।

काव्यकंठश्रीवासिष्ठगणपतिमुनिविरचितम्

# इंद्रसहस्रनामस्तोत्रम्

इंद्रो देवतमोऽनीळः सुपर्णः पूर्णबंधुरः ।
विश्वस्य दमिता विश्वस्येशानो विश्वचर्षणिः ॥ १ ॥

विश्वानि चक्रिर्विश्वस्मादुत्तरो विश्वभूर्बृहन् ।
चेकितानो वर्तमानः स्वधयाऽचक्रया परः ॥ २ ॥

विश्वानरो विश्वरूपो विश्वायुर्विश्वतस्पृथुः ।
विश्वकर्मा विश्वदेवो विश्वतो धीरनिष्कृतिः ॥ ३ ॥

त्रिषु जातस्तिग्मशृंगो देवो ब्रध्नोऽरुषश्चरन् ।
रुचानः परमो विद्वान् अरुचो रोचयन्नजः ॥ ४ ॥

ज्येष्ठो जनानां वृषभो ज्योतिर्ज्येष्ठं सहोमहि ।
अभिक्रतूनां दमिता धर्ता विश्वस्य कर्मणः ॥ ५ ॥

धर्ता धनानां धातृणां धाता धीरोधियेषितः ।
यज्ञस्य साधनो यज्ञो यज्ञवाहा अपामजः ॥ ६ ॥

यज्ञं जुषाणो यजतो युक्तग्रावणोऽवितेषिरः ।
सुवज्र श्च्यवनो योद्धाय शस्वी यज्ञियो यहुः ॥ ७ ॥

अव्ययात्मा दुर्मतीनां हन्तापापस्य रक्षसः ।
कृशस्य चोदिता क्रत्नुः कृतब्रह्मा धृतव्रतः ॥ ८ ॥

घृष्णवोजा अविताधीनां धनानां संजिदच्युतः ।
विहन्ता तमसस्त्वष्टा तनूपास्तरुतातुरः ॥ ९ ॥

त्वेषनृम्णस्त्वेषसंदृक् तुराषाडपराजितः ।
तुर्य्यो वृयोदस्मतमः तुविकूर्मितमस्तुजः ॥ १० ॥

वृषप्रभर्मा विश्वानि विद्वानादर्दिरस्त्रवाः ।
मन्द्रो मतीनां वृषभो मरुत्वान्मरुतामृषिः ॥ ११ ॥
महाहस्ती गणपतिर्धियं जिन्वो बृहस्पतिः ।
माहिनो मघवा मन्दी मर्कोऽर्को मेधिरो महान् ॥ १२ ॥

प्रतिरूपः परोमात्रः पुरुरूपः पुरुष्टुतः ।
पुरुहुतः पुरः स्ताता पुरुमायः पुरन्दरः ॥ १३ ॥

पुरुप्रशस्तः पुरुकृत् परां दर्ता पुरूतमः ।
पुरुगूर्तः पृत्सुजेता पुरुवर्षाः प्रवेपनी ॥ १४ ॥

पप्रिः प्रचेताः परिभूः पनीया न प्रतिष्कुतः ।
प्रवृद्धः प्रवयाः पाता पूषण्वानन्तरा भरः ॥ १५ ॥
पुरुशाकः पाञ्चजन्यः पुरुभोजाः पुरूवसुः ।
पिशंगरातिः पपुरिः पुरोयोधः पृथुज्रयाः ॥ १६ ॥

प्ररिक्वा प्रदिवः पूर्व्यः पुरोभूः पूर्वजा ऋषिः ।
प्रणेता प्रमतिः पन्यः पूर्वयावा प्रभूवसुः ॥ १७ ॥

प्रयज्युः पावकः पूषा पदवीः पथिकृत्पतिः ।
पुरुत्मा पलितोहेता प्रहेता प्राविता पिता ॥ १८ ॥
पुरुनृम्णः पर्वतेष्ठाः प्राचामन्युः पुरोहितः ।
पुरांभिन्दुरनाधृष्यः पुराजाः पप्रथिन्तमः ॥ १९ ॥

पृतनाषाड् बाहुशर्धी बृहद्रेणुरनिष्कृतः ।
अभिभूतिरयोपाष्टिः बृहद्रेरपि धानवान् ॥ २० ॥
ब्रह्मप्रियो ब्रह्मजूतो ब्रह्मवाहा अरंगमः ।
भोधिन्मना अव्रक्रक्षी बृहद्भानुरमित्रहा ॥ २१ ॥

भूरिकर्मा भरेकृत्नु भद्रकृद्भार्वरोभृमिः ।
भरेषु हाह्वो भूर्योजाः पुरौहा प्राशुषाप्रषाट् ॥ २२ ॥
प्रभंगीमहिषोभीमो भूर्यासुतिरहास्तिहा ।
प्रसद्दी विष्पतिर्वीरः परश्पाः श्रवसस्पतिः ॥ २३ ॥

पुरुदत्रः पितृतमः पुरुक्षुर्भूरिगुः पणिः ।
प्रत्वाक्षाणाः पुरां धर्मापनस्युरभिमातिहा ॥ २४ ॥
पृथिव्या वृषभः प्रत्नः प्रमन्दी प्रथमः पृथुः ।
त्यः समुद्र व्यचाः पायुः प्रकेतश्चर्षणीसहः ॥ २५ ॥
कारुधायाः कविवृधः कनीनः क्रतुमान्क्रतुः ।
क्षपांवस्ता कवितमोमिर्वाहाः कीरिचोदनः ॥ २६ ॥
क्षपावान्कौशिकः कारी राजाक्षम्यस्य गोपतिः ।
गौर्गोदुरः दुरोश्वस्य यवस्यदुरआदुरिः ॥ २७ ॥
चंद्रबुध्नश्चर्षणिप्राश्चकृत्यश्चोदयन्मतिः ।
चित्रभानुश्चित्रतमश्चम्रिषश्चक्रमाखजः ॥ २८ ॥
तुविशुष्मसुविद्युम्नः तुमिजातस्तुवीमघः ।
तुविकूर्मिस्तुविम्रक्ष स्तुविहाम्मस्तुविप्रतिः ॥ २९ ॥
तुविनृम्णस्तुविग्रीवस्तुविराधास्तुविक्रतुः ।
तुविमात्रस्तुविग्राभस्तुविदेष्णस्तुविष्वणिः ॥ ३० ॥
तूतुजिस्तवसस्तक्नस्तुविम्रिस्तुर्वणिस्त्वदः ।
रथेष्टस्तरणिस्तुम्रस्त्वीषीमाननपच्युतः ॥ ३१ ॥
तोदस्तरुत्रस्तविषी मुषाणस्तत्रिषस्तुरा ।
तितिर्वा ततुरिस्त्राता भूर्णिस्तूर्णिस्तवस्तरः ॥ ३२ ॥
यज्ञवृद्धो यज्ञियानांप्रथमो यज्वनोवृयः ।
अमित्रखादोऽनिमिषोविषुणोऽसुम्वतोऽसुरः ॥ ३३ ॥
अक्षितो तिरदाभ्णोर्यः शिषिणोवानगोरुधः ।
आश्रुत्कर्णोन्तरिक्षप्रा अमितौजा अरिष्टुतः ॥ ३४ ॥
अदृष्टप्रकरादूर्ध्व ऊर्ध्वसानः सनद्युवा ।
स्थिरः सूर्यः स्वभूत्योः जाः सत्यरायाः सनस्रुतः ॥ ३५ ॥
अकल्पः सत्वानां केतुरच्युतच्युदुरुव्यचाः ।
शवसी स्वपतिः स्वोजा शचीवानविदीधयुः ॥ ३६ ॥

सत्यशुष्मः सत्यसत्वा सूनुः सत्यस्य सोमपः ।
दस्योर्हन्ता दिवोधर्ता राजादिव्यस्य चेतनः ॥ ३७ ॥
ऋग्मियोऽर्वोरोचमानोरभोदा ऋतपा ऋतः ।
ऋजीषीरणकृद्देवान् ऋत्वियोरध्रचोदनः ॥ ३८ ॥
ऋष्वोरायोऽवनीराजा रयिस्थानोरदावसुः ।
ऋभुक्षा अनिमानोस्त्रः सहमानः समुद्रियः ॥ ३९ ॥
ऋणकातिर्गिर्वाणस्युः कीजाः खिद्वाखजंकरः ।
ऋजीषो वसुविद्वेन्योवाजेषु दधृषः कविः ॥ ४० ॥
विरप्सी विलितो विप्रो विश्ववेदा ऋतावृधः ।
ऋतयुक्धर्मकृद्धेनुर्धनजिद्धामवर्मवाट् ॥ ४१ ॥
ऋतेजाः सक्षणिः सोम्यः संसृष्टजिद्ऋभुष्टिरः ।
ऋतयुः सबलः सह्युर्वज्रवाहा ऋचीषमः ॥ ४२ ॥
ऋग्मीदधृष्वानृषौजाः सुगोपाः स्वयशस्तरः ।
स्वभिष्टिसुम्नः सेहानः सुनीतिः सुकृतः सुचिः ॥ ४३ ॥
ऋणयाः सहसः सूनुः सुदानुः सगणो वसुः ।
स्तोम्यः समद्वासत्राहास्तोमवाहाऋतीषहः ॥ ४४ ॥
शविष्टः शवसः पुत्रः शतमन्युः शतक्रतुः ।
शक्रः शिक्षानरः शुष्मीश्रुत्कर्णः श्रवयत्सखा ॥ ४५ ॥
शतमूतिः शर्धनीतिः शतनीथः शतमघः ।
श्लोकी शिवतमः शृत्यं नामविभ्रदमानतः ॥ ४६ ॥
शूरः शिप्रीसहस्रोतिः शुभ्रः शृङ्गवृषोनपात् ।
शासः शाकीस्रवस्कामः श्रवसावानहंसनः ॥ ४७ ॥
सुरूपकृत्नुरीशानः शुसुवानः शचीपतिः ।
सतीनसत्वासनिता शक्ती वा नमितक्रतुः ॥ ४८ ॥
सहस्रचेताः सुमनाः शृत्यः शुद्धः शृतामघः ।
सत्रादावा सोमपावा सुक्रतुः स्मश्रुषु शृतः ॥ ४९ ॥

चोदप्रवृद्धो विश्वस्य जगतः प्राणतस्पतिः ।
चौत्नः सुप्रकरस्नो नाचकमानः सदावृधः ॥ ५० ॥
स्वभिष्टिः सत्पतिः सत्यश्चारुर्विरतमस्यति ।
चित्रश्चिकित्वानाज्ञाता प्रतिमानं सतः सतः ॥ ५१ ॥
स्थाता सचेताः सदिवः सुदंशासुश्रवस्तमः ।
सह्योदाः सुश्रुतः सम्राट्सुपारः सुन्वतः सखा ॥ ५२ ॥
ब्रह्मवाहन्तमोब्रह्मविष्णुर्वश्यः पतिर्हरिः ।
रणाय संस्कृतो रुद्रो रणितेश्यानः कृच्छिवः ॥ ५३ ॥
विप्रजूतो विप्रतमो यह्वोवज्री हिरण्मयः ।
वव्रो वीरतरोवायुर्मोतिरिश्वा मरुत्सखा ॥ ५४ ॥
गूर्तश्रवा विश्वगूर्तो वन्दनश्रुद्विचक्षणः ।
वृष्णिर्वसुपतिर्वाजी वृषभो वाजिवी वसुः ॥ ५५ ॥
विप्रो विभीषणो वह्निर्वृद्धायुर्विश्रुतो वृषः ।
वज्रभृद्वृत्रहावृद्धो विश्ववारो वृत्तंचयः ॥ ५६ ॥
वृषजूतिर्वृषरथो वृषभान्नो वृषक्रतुः ।
वृषकर्मा वृषमणाः सुदक्षः सुन्वतो वृधः ॥ ५७ ॥
अद्रोघवागसुरः वेदाः सत्राकरोऽजरः ।
अपारः सुहवोऽभीरुरभिभंगोंगिरस्तमः ॥ ५८ ॥
अमर्थ्यः स्वायुधोऽशत्रुरप्रतीतोभिमातिषाट् ।
अमत्री सूनुरश्वत्र्यः स्वद्दिष्टिरभयंकरः ॥ ५९ ॥
अभिनेता स्पार्हा राधाः सप्तरश्मीरभिष्टिकृत् ।
अनर्वास्वर्जिदिष्कर्ता स्तोतृणामवितापरः ॥ ६० ॥
अजातशत्रुः सेनानी रुभयाव्युभयंकरः ।
उरुगायः सत्ययोनिः सहस्वानुर्वरापतिः ॥ ६१ ॥
उग्रोगोपा उग्रबाहुरुग्रधन्वोक्थवर्धनः ।
गाधश्रवागिरां राजागंभीरोगिर्वणस्तमः ॥ ६२ ॥

वज्रहस्तश्चर्षणीनां वृषभो वज्रदक्षिणः ।
सोमकामः सोमपतिः सोमवृद्धः सुदक्षिणः ॥ ६३ ॥
सुब्रह्मा स्थविरः सूरः सहिष्ठः सप्रथाः सराट् ।
हरिश्मशारुर्हरिवान्हरीणांपतिरस्तृतः ॥ ६४ ॥
हिरण्यबाहुरुव्यूतिर्हरिकेशो हिरीमशः ।
हरिशिप्रो हर्यमाणो हरिजातो हरिं भरः ॥ ६५ ॥
हिरण्यवर्णो हर्यश्वो हरिवर्पा हरिप्रियः ।
हनिष्टो हर्यतो हव्यो हरिष्टा हरियोजनः ॥ ६६ ॥
सत्वासुशिप्रः सुक्षत्रः सुवीरः सुतपा ऋषिः ।
गायान्यो गोत्रभिद्ग्रामं वहमानो गवेषणः ॥ ६७ ॥
जिष्णुस्तस्थुष ईशान ईशानो जगतो नृतुः ।
नर्याणि विद्वान्नृपतिः दातानृम्णतय तूतुजिः ॥ ६८ ॥
निमेघमानो नर्यापाः सिन्धूनां पतिरुत्तरः ।
नर्यो नियुत्वान्निचितो नक्षद्धा भोनहुष्टरः ॥ ६९ ॥
नव्यो निधाता नृमणाः सध्रिचीनः सुतेरणः ।
नृतमानो नदनुमान्नवीयान्नृतमोनृजित् ॥ ७० ॥
विचयिष्टो वज्रबाहुर्वृत्रखादोबलं रुजः ।
जातुभर्मा ज्येष्ठतमो जनभक्षो जनं सहः ॥ ७१ ॥
विश्वासाध्वंसगोवस्यान्निष्याढनिषमान्नृषाट् ।
पूर्भित्पुराषाढभिषाट् जगतस्तस्थुषस्पतिः ॥ ७२ ॥
संवृत्कमत्युसंधाता सुसंदृत्सविताऽरुणः ।
स्वर्यः स्वरोचिः सुत्रामा स्तुषेय्यः सनजाः स्वरिः ॥ ७३ ॥
कृण्वन्न केतवेकेतुं पेशः कृण्वन्न पेशसे ।
वज्रेण हत्वीमहिनो मरुत्स्तोत्रो मरुद्गणः ॥ ७४ ॥
महावीरो महाव्रातो महाय्यः प्रमतिर्महो ।
माता मघोनां मंहिष्टो मन्युमिर्मन्युमत्तमः ॥ ७५ ॥

चोदप्रवृद्धो विश्वस्य जगतः प्राणतस्पतिः ।
चौत्नः सुप्रकरस्नो नाचकमानः सदावृधः ॥ ५० ॥
स्वभिष्टिः सत्पतिः सत्यश्चारुर्विरतमस्यति ।
चित्रश्चिकित्वानाज्ञाता प्रतिमानं सतः सतः ॥ ५१ ॥
स्थाता सचेताः सदिवः सुदंशासुश्रवस्तमः ।
सहोदाः सुश्रुतः सम्राट्सुपारः सुन्वतः सखा ॥ ५२ ॥
ब्रह्मवाहन्तमोब्रह्मविष्णुर्वश्यः पतिर्हरिः ।
रणाय संस्कृतो रुद्रो रणितेश्यानः कृच्छ्रिवः ॥ ५३ ॥
विप्रजूतो विप्रतमो यह्वोवज्री हिरण्मयः ।
वव्रो वीरतरोवायुर्मातिरिश्वा मरुत्सखा ॥ ५४ ॥
गूर्तश्रवा विश्वगूर्तो वन्दनश्रुद्विचक्षणः ।
वृष्णिर्वसुपतिर्वाजी वृषभो वाजिवी वसुः ॥ ५५ ॥
विप्रो विभीषणो वह्निर्वृद्धायुर्विश्रुतो वृषः ।
वज्रभृद्वृत्रहावृद्धो विश्ववारो वृत्तंचयः ॥ ५६ ॥
वृषजूतिर्वृषरथो वृषभान्नो वृषक्रतुः ।
वृषकर्मा वृषमणाः सुदक्षः सुन्वतो वृधः ॥ ५७ ॥
अद्रोघवागसुरः वेदाः सत्राकरोऽजरः ।
अपारः सुहवोऽभीरुरभिभंगोंगिरस्तमः ॥ ५८ ॥
अमर्त्यः स्वायुधोऽशत्रुरप्रतीतोभिमातिषाट् ।
अमत्री सूनुरश्वत्र्यः स्वद्दिष्टिरभयंकरः ॥ ५९ ॥
अभिनेता स्पार्हो राधाः सप्नरश्मीरभिष्टिकृत् ।
अनर्वास्वर्जिदिष्कर्ता स्तोतृणामवितापरः ॥ ६० ॥
अजातशत्रुः सेनानी रुभयाव्युभयंकरः ।
उरुगायः सत्ययोनिः सहस्वानुर्वरापतिः ॥ ६१ ॥
उग्रोगोपा उग्रबाहुरुग्रधन्वोक्थवर्धनः ।
गाधश्रयागिरां राजागंभीरोगिर्वणस्तमः ॥ ६२ ॥

वज्रहस्तश्चर्षणीनां वृषभो वज्रदक्षिणः ।
सोमकामः सोमपतिः सोमवृद्धः सुदक्षिणः ॥ ६३ ॥
सुब्रह्मा स्थविरः सूरः सहिष्ठः सप्रथाः सराट् ।
हरिश्मशारुर्हरिवान्हरीणांपतिरस्तृतः ॥ ६४ ॥
हिरण्यबाहुरुव्यूतिर्हरिकेशो हिरीमशः ।
हरिशिप्रो हर्यमाणो हरिजातो हरिं भरः ॥ ६५ ॥
हिरण्यवर्णो हर्यश्वो हरिवर्पो हरिप्रियः ।
हनिष्ठो हर्यतो हव्यो हरिष्ठा हरियोजनः ॥ ६६ ॥
सत्वासुशिप्रः सुक्षत्रः सुवीरः सुतपा ऋषिः ।
गायान्यो गोत्रभिद्ग्रामं वहमानो गवेषणः ॥ ६७ ॥
जिष्णुस्तस्थुष ईशान ईशानो जगतो नृतुः ।
नर्याणि विद्वान्नृपतिः दातानृम्णतय तूतुजिः ॥ ६८ ॥
निमेघमानो नर्यापाः सिन्धूनां पतिरुत्तरः ।
नर्यो नियुत्वान्निचितो नक्षद्धा भोनहुष्टरः ॥ ६९ ॥
नव्यो निधाता नृमणाः सध्रिचीनः सुतेरणः ।
नृतमानो नदनुमान्नवीयान्नृतमोनृजित् ॥ ७० ॥
विचयिष्टो वज्रबाहुर्वृत्रखादोबलं रुजः ।
जातुभर्मा ज्येष्ठतमो जनभक्षो जनं सहः ॥ ७१ ॥
विश्वासाध्वंसगोवस्यान्निष्याढनिषमान्नृषाट् ।
पूर्भित्पुराषाढभिषाट् जगतस्तस्थुषस्पतिः ॥ ७२ ॥
संवृत्कमत्युसंधाता सुसंदृत्सविताऽरुणः ।
स्वर्यः स्वरोचिः सुत्रामा स्तुषेय्यः सनजाः स्वरिः ॥ ७३ ॥
कृण्वन्न केतवेकेतुं पेशः कृण्वन्न पेशसे ।
वज्रेण हत्वीमहिनो मरुत्स्तोत्रो मरुद्गणः ॥ ७४ ॥
महावीरो महाव्रातो महाय्यः प्रमतिर्मही ।
माता मघोनां मंहिष्ठो मन्युमिर्मन्युमत्तमः ॥ ७५ ॥

मेषोमही वृन्मन्दानो माहिनावान्महीमतिः ।
ऋक्षोमृलीको मंहिष्टो ऋक्षकृत्वा महामहः ॥ ७६ ॥

मदच्युन्मर्यितामद्वा मदानां पतिरातपः ।
सुशस्तिः स्वस्तिदा स्वर्द्दप्राधानां पतिराकरः ॥ ७७ ॥

इषुहस्त इषां दाता वसुदाता विदद्वसुः ।
विभूतिर्व्योनशिर्वेनो वरीयान्विश्वजिद्विभुः ॥ ७८ ॥

नृचक्षाः सहुरिः स्वविंत्सुयज्ञः सुष्टुतः स्वयुः ।
अपिः पृथिव्या जनिता सूर्यस्य जनिता श्रुतः ॥ ७९ ॥

स्पद्विहायाः स्मत्पुरंधिवृ षपर्वावृषन्तमः ।
साधारणः सुखरथः स्वस्वः सत्राजिदद्भुतः ॥ ८० ॥

ज्येष्ठराजो जीरदानुर्जग्मिर्वित्वक्षणो वशो ।
विधाता विश्वमा आशुर्मायीवृद्धमहाः वृधः ॥ ८१ ॥

वरेण्यो विश्वतूवातस्येशानो दौर्विचर्षणिः ।
सतीनमन्युर्गोदत्रः सद्योजातोविभंजनुः ॥ ८२ ॥

वितन्तसाय्यो वाजानांविभक्तावस्व आकरः ।
वीरको वीरयुर्वज्रं बभीर्विरेण्य आघृणिः ॥ ८३ ॥

वाजिनेयो वाजसनिर्वाजानां पतिराजिकृत् ।
वस्तोष्पतिर्वर्पणीतिर्विशां राजा वपोदरः ॥ ८४ ॥

विभूतद्युम्न आचक्रिरादारी रोधतो वधः ।
आखण्डलोदस्मवर्चाः सर्वसेनो विमोचनः ॥ ८५ ॥

वज्रस्य भर्ता वार्याणां पतिर्गोजिद्गवां पतिः ।
विश्वव्यचाः संचकानः सुहार्थो जनितादिवः ॥ ८६ ॥

सुमन्तुनामा पुरुषः प्रतीको बृहतः पतिः ।
दीध्यानो दामनो दाता दीर्घश्रवस ऋग्भसः ॥ ८७ ॥

दंसनावान्दिवः संम्राड्देवजूतो दिवावसुः ।
दशमो देवता दक्षो द्धुध्रोद्युम्नि द्युमन्तमः ॥ ८८ ॥

मंहिष्टरातिर्योधी दीद्यानो दधृषिर्युधिः ।
दुष्टरीतुर्दुश्च्यवनो दिवोमानो दिवोवृषा ॥ ८९ ॥
दक्षाय्यो दस्युहाधृष्णुः दक्षिणावान्दियावसुः ।
धनस्पृद्धृषितो धाता दयमानो धनंजयः ॥ ९० ॥
दिव्यो द्विबर्हाः सन्नार्यः समर्यस्त्राः सिमः सखा ।
द्युक्षः समानो दंसिष्ठो राधसः पतिरध्रिगुः ॥ ९१ ॥
सम्राट् पृथिव्या ओजस्वान् स्वयोधा ऋतपा ऋभुः ।
एकोराजैधमा नद्विडेकवीर उरुक्रयाः ॥ ९२ ॥
लोककृज्जनिताऽश्वानां जोहूत्रो जनिता गवाम् ।
जरिता जनुषां राजा गिर्वाणाः सुन्वतोऽविता ॥ ९३ ॥
अत्कं वसानः कृष्टीनां राजोक्यः शिप्रवानुरुः ।
ईद्योदाश्वाग्निन तमोघोरः संक्रन्दनः स्ववान ॥ ९४ ॥
जागृविर्जगतो राजागृत्स्यो गोविद्धनाघनः ।
जेताऽभिभूरकूपारो दानवानसुरोऽर्णवः ॥ ९५ ॥
धृष्विंवर्दमूना नास्तवसस्तवीयानन्तमोऽवृतः ।
रायोदाता रयिपतिः विपश्चिद्वृत्रहन्तमः ॥ ९६ ॥
अपरीतः षाडपश्चाद् दध्वायुत्कार आरितः ।
वोल्हावनिष्ठो वृष्ण्यावान्नृषण्वान वृकोद्वतः ॥ ९७ ॥
गर्भोऽसमस्तकाव्योयुगहिशुष्मोदधृष्वणिः ।
प्रत्नः पतिर्वाजदावा ज्योतिः कर्ता गिरां पतिः ॥ ९८ ॥
अनवद्यः संभृताश्वोवज्रिवानद्रिमान्द्युमान् ।
दस्मो यजत्रो योधीया नकवारिर्यतंकरः ॥ ९९ ॥
पृदाकुसानुरोजीयान् ब्रह्मणश्चोदिता यमः ।
वन्दनेष्टाः पुरां भेत्ता बन्दुरेष्टा बृहद्दिवः ॥ १०० ॥
वरुता मधुनो राजा प्रणेनीः पप्रथी युवा ।
उरुशंसोहा वं स्तोता भूरिदात्रो बृहच्छ्रवाः ॥ १०१ ॥

मातरिश्वा यातां वृषभो महोदाता महावदः ।
सुकृत्यः सुराधाः सत्राषाहोदतीर्ना नदोधुनिः ॥ १०२ ॥
अकामकर्षणः स्वर्षाः सुमृळीकः सहस्कृतः ।
पारुस्यस्य होता सिंधूनां वृषाभोजोरथीतमः ॥ १०३ ॥
सखा मुनीनां जनिदाः स्वधावान समोऽप्रतिः ।
मनस्वानद्वरो मर्यो बृबदुक्थोऽविता भगः ॥ १०४ ॥
अषाह्लोऽरीहल आदर्तो वीरं कर्ता विशस्पतिः ।
एकः पतिरिनः पुष्टिः सुवीर्यो हरिपाः सुदृक् ॥ १०५ ॥
एकोहव्यः सनादारुमेकोवाकस्य वक्षणिः ।
सुवृक्तिरमृतोऽमृक्तः खजकृद्वलदाः शुनः ॥ १०६ ॥
अमत्रो मित्र आक्याय्यः सुदामाङ्गिजन् महोमही ।
रथः सुबाहुरुशनात्सुनीथो भूरिदाः सुदाः ॥ १०७ ॥
मदस्य राजा सोमस्य पीत्वीज्यायान्दिवः पतिः ।
तविषीवान्धनो युध्मो हवन स्तुत्सहः स्वराट् ॥ १०८ ॥



## अत्र मे भवन्त्युपसंहारश्लोकाः

इदं सहस्रमिन्द्रस्य नाम्नां परमपावनम् ।
ऋग्वेदतो गणपतिः संगृह्य विनिबद्धवान् ॥ १ ॥
नात्र नाम्नः पौनरुक्त्यं न 'च' कारादि पूरणम् ।
श्लोकमध्ये न चारब्धा शतकस्योपसंहृतिः ॥ २ ॥
नाम्नामेषां छान्दसत्वात्सर्वेषां च स्वरूपतः ।
अवलोक्य यथा छन्दः शब्दशुद्धिः विचक्षणैः ॥ ३ ॥
अनेकपदनामानि विनियोज्यानि पूजने ।
चतुर्थ्यन्तप्रयोगेषु व्युत्क्रमाच्च यथान्वयम् ॥ ४ ॥

अस्य नामसहस्रस्य वेदमूलस्य सेवने ।
पूर्णं फलं तद्विज्ञेयं यत्स्वाध्यायनिषेवणे ॥ ५ ॥
मन्त्रेभ्यः संभृतं सारमेतन्नामसहस्रकम् ।
ऐन्द्रं यो भजते भक्त्या तस्य स्युः सिद्धयो वशे ॥ ६ ॥
इन्द्रो विजयते देवः सर्वस्य जगतः पतिः ।
वेदमूलं जयत्येतत्तस्य नाम सहस्रकम् ॥ ७ ॥

इति श्रीभगवन्महर्षिरमणांतेवासिनो वासिष्ठस्य नरसिंहसूनोर्गणपतेः
कृतिः इन्द्रसहस्रनामस्तोत्रं सम्पूर्णम्

---

# उमाशतकम्

## प्रथमं दशकम्

फुल्लत्वं रविदीधिति निरपेक्षमुमामुखाब्जस्य ।
पूर्णं करोतु मानसमभिलाषं पुण्यभूमिजुषाम् ॥ १
कैलासवासिनो वा धवलद्युतिबिम्बनिलया वा ।
आकाशान्तरपीठ स्थितोत मे देवता भवति ॥ ( स्थिता + उता ) २
आकाशान्तरपीठस्थितैव साक्षात्पराशक्तिः ।
तस्या अंशव्यक्ती शशिनि सिताद्रौ च राजन्त्यौ ॥ ३
संकल्पवातसंगादानन्दरसो घनीभूतः ।
अन्तर्व्यापकशक्तेः समपद्यते वपुर्मातः ॥ ४
इच्छाविचित्रवीर्या तेजःपटलो घनीभूतः ।
अन्तर्व्यापकशक्तेः समपद्यते विभोर्गात्रम् ॥ ५
इच्छायोगा तेजसि तव भागः कश्चिदस्तीशे ।
विज्ञानयोगतो मुदि भाग्यस्त्वयि कश्चिदीशस्य ॥ ६

सम्राजौ शशभृति यौ गृहवन्तौ यौ च सितगिरिणा ।
तदिदं युवयोर्माया वेषान्तरमिथुनयुगलमुमे ॥ ७
यद्यपि विभूतिरधिकं युवयोर्विश्वाम्बिके भवति ।
मिथुने तथा प्यमू वां नेदिष्ठे देवि पश्यामः ॥ ८
दंपत्योर्भगवति वां प्रतिबिम्बौ भास्करे भवतः ।
देहभुवौ भूचक्र स्वप्नव्यक्ती सुधामहसि ॥ ९
देहे भुवः प्रतिबिम्बः प्राणान्मूलस्य नेदीयान् ।
प्रतिबिम्बव्यक्तेश्च स्वप्नव्यक्तिश्च नेदिष्ठा ॥ १०

## द्वितीयं दशकम्

काश्मीरमुन्नतपयोधरकुंभसीम्नि स्निग्धं प्रदिग्धमचलात्मजयाऽवतान्नः ।
भेत्ता पुरामुपरि भस्मन एव धत्ते रागस्य चिह्नमिव यत्परिरंभलग्नम् ॥ १ ॥
अस्माकमम्बुदघनस्तनितोपमेषु हेरंबबृंहितविभूतिषु भाषितेषु ।
सिद्धोद्यमानमतिलंघ्य निजापदानं बद्धश्रुतिर्भवतु भर्गगृहस्य नेत्री ॥ २ ॥
सन्देह एष मम चन्द्रकलाधरस्य शुद्धान्तसुन्दरि मनांसि सतां ममाङ्घ्रिः ।
शुद्धानि किं विशति किंनु भजन्ति शुद्धिं अङ्घ्रेः प्रवेश मम तानि विधूय पङ्कम् ॥ ३ ॥
त्रैलोक्यपालनविधायि विकस्वराब्ज शोभाविडंबि मणिपीठतटीविलम्बि ।
क्षेमप्रदायि हृदये चरणं न्यधायि गौरि त्वया यदि कुतश्चपलं मनो मे ॥ ४ ॥
विघ्नानि यन्मुहुरिदं च मनश्चलं यत्सौख्यं न किंचिदपि यद्यदुपर्ये सौख्यम् ।
त्वा माश्रितस्य च ममाखिललोकराज्ञि मत्तः परो जगति को मनुजेषु कल्की ॥ ५ ॥
मा भून्निदेशवचनं नयनाञ्चलस्य माभूत्प्रसारण मयि त्यज निर्दयत्वम् ।
अंगीकुरु स्तुतगुणे चरणाम्बुजं ते ध्यातुं तदेव बहु मे भुवनस्य मातः ॥ ६ ॥
कामं ददातु न ददातु मनो धिनोतु नो वा धिनोतु नयताद्दिव मन्यतो वा ।
आत्मर्पितोऽयमगजापदपंकजाय किं कांक्षते प्रतिपदं विपुलोनुरागः ॥ ७ ॥

पादं ददासि मनसे किमु पापिनो मे पारिप्लवाय भुवनाधिकवासनाय।
दूरे स तावदचलेन्द्रकुमारि कामो देवि प्रणाममुररीकुरु तावताऽलम् ॥ ८ ॥
आराधनं तव भवानि यथाविधानं कर्तुं कुलाचलकुमारि न पारयामि।
पादारविन्दयुगमेव तवानतोऽहं पापाकुलः शरणमीश्वरि कांक्षमाणः ॥ ९ ॥
बद्धव्रता प्रणतपापनिवारणे त्वं बद्धाञ्जलिश्च बहुपापसमाकुलोऽहम्।
कर्तव्यमद्रितनये निपुणं विमृश्य निर्धारयात्र न यथा यशसो विलोपः ॥१०॥

---

## तृतीयं दशकम्

व्रतं तव विदन्हृदि प्रणतपापनाशे कृतं
फलप्रवणपातकप्रमथितोऽपि नास्म्याकुलः।
भवामि शिरसा नतस्तव भवानि पदाम्बुजं
व्रतस्य परिपालने यदि मतिर्गतिर्मे भव ॥ १ ॥
तपश्चरितुमुत्तमं प्रयतितं मया नैकदा
परं तु बहुलैरघैः परिणतैः वृतोऽध्वा मम।
अयं मम दृढोऽञ्जलिस्तनुवियोगकालावधि-
र्यदि त्वमचलव्रतास्यचलकन्यके मामव ॥ २ ॥
अजेयबहुपापभृद्भुवि जनिष्यमाणः खलः
किमीशदयिते पुरा न विदितस्तवायं जनः।
व्रतं कृतमिदं त्वया परमसाहसोपेतया
क्व वा जननि योषितां जगति दीर्घमालोचनम् ॥ ३ ॥
इहा पु रघमर्षणा न्ययश एव भूत्वा मुधा
व्यलोकि नियमैस्तथा न बहुलैश्च कश्चिज्जयः।
स्थिरं न मदघःक्षये मदघतेजसा भूयसा
व्रतं च तव कुण्ठितं यदि ममैव कीर्तिः परा ॥ ४ ॥

क्षये यदि मदेनसामसुकरेण धीरं मनो
न ते नगपतेः सुते किमपि चिन्त्यमेतत्कृते ।
व्रतं विसृज तन्मुधा ननु वधूस्वभावात्कृतं
स्थिरीभवतु दुर्विधिः भुवि तव प्रसादाद्बली ॥ ५ ॥

कृतं परमयत्नतः चिरमनुज्झितं श्रद्धया
भृतं बहुविधोद्यमैरविजितं महापातकैः ।
गतं घनतरं यशो जयति पापजातं मम
व्रतं च तव तादृशं जननि कस्य वा स्याज्जयः ॥ ६ ॥

मदीयदुरितावली प्रलयकाल कादम्बिनी मदोन्नतविजृम्भणं वृजिनभङ्गबद्धव्रते ।
भवप्रियतमे निजप्रबलहुंकृतिप्रोद्धत प्रभञ्जनमहौजसा शमय पालयात्मव्रतम् ॥ ७ ॥

अघक्षयविधौ तु ते परिणता परोपकृता
विभेदकथनं कथं पृथुलवैभवे युज्यते ।
इदं तव विगर्हणं परिणतैनसां वा स्तुतिः
मनो यदि मृडानि ते जगति साध्यमेवाखिलम् ॥ ८ ॥

सहस्रनयनादिभिः सुरवरैः समाराधिता सहस्रकिरणप्रभा सितमरीचिशीता मम ।
सहस्रदलपंकजे कृतनिकेतना देहिनां सहस्रदललोचना दुरितसन्ततिं कृन्ततु ॥ ९ ॥

सरोजभवसंस्तुता सकललोकराज्येश्वरी करोपमितपल्लवा करुणायान्तरुल्लोलिता ।
उरोरुहभरालसा मयपुरारिसंमोहिनी करोतु मदघक्षयं कुमुदलोचना काचन ॥१०॥



## चतुर्थं दशकम्

कालाम्भोधरचारुसान्द्रकबरी पूर्णेन्दुबिम्बानना
ताटंकद्युतिधौतगण्डफलका ताम्बूलरक्ताधरा ।
प्रालेयद्युतिबालकेन रचितोत्तंसा हराङ्कासना
शान्ता नूतनपल्लवाभचरणा भूत्यै शिवा चिन्त्यते ॥ १ ॥

श्रीपादं तवशैलराजदुहितः भाखत्करास्फालन-
प्रोद्बुद्धांबुजसुन्दरं श्रुतिवधूचूडातटीलालितम् ।
वन्दन्तां त्रिदिवौकसः प्रणयतः संवाहयत्वीश्वरो
योगी ध्यायतु वन्दिवद्भगवति प्रस्तौति सोऽयं जनः ॥ २ ॥

यस्याश्चामरधारिणी सरसिजप्रासादसञ्चारिणी
पौलोमी हृदयेश्वरप्रभृतयो नाकौकसः किंकराः ।
देवः कैरवबन्धुकोरकधरः लीलासहायः सखा
तस्याः पादसरोजवन्दिपदवीं प्राप्तोस्म्यहं भाग्यतः ॥ ३ ॥

पादस्य क्रियते क्षणान्कतिचन ध्यानं जगद्धात्रि ते
यत्तस्येभघटाकुलाङ्गनमहीश्रीर्नानुरूपं फलम् ।
नोद्गारो मधुमाधुरीमधुमुषां स्वाभाविको वा गिरां
साधीयस्तु फलं यदीश्वरि पुनर्ध्यातुं मतिर्जायते ॥ ४ ॥

देवि त्वच्चरणारविन्दयुगलध्यानस्य केचित्फलं
मन्यन्ते रथवाजिसामजवधूसौधादिरूपां श्रियम् ।
पीयूषद्रवसार वैभवमुषां वाचां परे पाटवं
प्राज्ञाः साधनमादितः परिणतौ प्राहुः फलं तत्स्वयम् ॥ ५ ॥

लोभः कुत्रचिदस्ति कुत्रचिदसौ रोषः परं भीषणः
कुत्राप्येष मनोभवोऽतिमलिने स्वान्ते निशान्ते मम ।
एतस्याप्यहहाद्रिराजतनुजे कोणे त्वदीयं पदं
खेटीमस्तकलालितं शुचितमं वाञ्छामि कर्तुं खलः ॥ ६ ॥

कन्दर्पेण निवारितं प्रहसता लोभेन निर्भर्त्सितं
मात्सर्येण तिरस्कृतं मदमहानागेन चाऽभिद्रुतम् ।
दुर्भ्रान्त्या गलहस्तितं बत पुनः क्रोधेन धूतं बला-
दप्येतत्पदमम्ब ते विशति मे चेतोऽस्य वर्ण्या कृपा ॥ ७ ॥

उद्दीप्यन्नखरांशुजालजटिलः त्वत्पादकंठीरवो
यावन्मीलितलोचनः शशिकलाचूडामणेर्वल्लभे ।

क्षये यदि मदेनसामसुकरेण धीरं मनो
न ते नगपतेः सुते किमपि चिन्त्यमेतत्कृते ।
व्रतं विसृज तन्मुधा ननु वधूस्वभावात्कृतं
स्थिरीभवतु दुर्बिधिः भुवि तव प्रसादाद्बली ॥ ५ ॥

कृतं परमयत्नतः चिरमनुज्झितं श्रद्धया
भृतं बहुविधोद्यमैरविजितं महापातकैः ।
गतं घनतरं यशो जयति पापजातं मम
व्रतं च तव तादृशं जननि कस्य वा स्याज्जयः ॥ ६ ॥

मदीयदुरितावली प्रलयकाल कादम्बिनी मदोन्नतविजृम्भणं वृजिनभङ्गबद्धव्रते ।
भवप्रियतमे निजप्रबलहुंकुतिप्रोद्धत प्रभञ्जनमहौजसा शमय पालयात्मव्रतम् ॥ ७ ॥

अघक्षयविधौ तु ते परिणता परोपकृता
विभेदकथनं कथं पृथुलवैभवे युज्यते ।
इदं तव विगर्हणं परिणतैनसां वा स्तुतिः
मनो यदि मृडानि ते जगति साध्यमेवाखिलम् ॥ ८ ॥

सहस्रनयनादिभिः सुरवरैः समाराधिता सहस्रकिरणप्रभा सितमरीचिशीता मम ।
सहस्रदलपंकजे कृतनिकेतना देहिनां सहस्रदललोचना दुरितसन्ततिं कृन्ततु ॥ ९ ॥

सरोजभवसंस्तुता सकललोकराज्येश्वरी करोपमितपल्लवा करुणायान्तरुल्लोलिता ।
उरोरुहभरालसा मयपुरारिसंमोहिनी करोतु मदघक्षयं कुमुदलोचना काचन ॥१०॥



## चतुर्थं दशकम्

कालाम्भोधरचारुसान्द्रकबरी पूर्णेन्दुबिम्बानना
ताटंकद्युतिधौतगण्डफलका ताम्बूलरक्ताधरा ।
प्रालेयद्युतिबालकेन रचितोत्तंसा हराङ्कासना
शान्ता नूतनपल्लवाभचरणा भूत्यै शिवा चिन्त्यते ॥ १ ॥

श्रीपादं तवशैलराजदुहितः भाखत्करास्फालन-
प्रोद्बुद्धांबुजसुन्दरं श्रुतिवधूचूडातटीलालितम् ।
वन्दन्तां त्रिदिवौकसः प्रणयतः संवाहयत्वीश्वरो
योगी ध्यायतु वन्दिवद्भगवति प्रस्तौति सोऽयं जनः ॥ २ ॥

यस्याश्चामरधारिणी सरसिजप्रासादसञ्चारिणी
पौलोमी हृदयेश्वरप्रभृतयो नाकौकसः किंकराः ।
देवः कैरवबन्धुकोरकधरः लीलासहायः सखा
तस्याः पादसरोजवन्दिपदवीं प्राप्तोस्म्यहं भाग्यतः ॥ ३ ॥

पादस्य क्रियते क्षणान्कतिचन ध्यानं जगद्धात्रि ते
यत्तस्येभघटाकुलाङ्गनमहीश्रीर्नानुरूपं फलम् ।
नोद्गारो मधुमाधुरीमधुमुषां स्वाभाविको वा गिरां
साधीयस्तु फलं यदीश्वरि पुनर्ध्यातुं मतिर्जायते ॥ ४ ॥

देवि त्वच्चरणारविन्दयुगलध्यानस्य केचित्फलं
मन्यन्ते रथवाजिसामजवधूसौधादिरूपां श्रियम् ।
पीयूषद्रवसार वैभवमुषां वाचां परे पाटवं
प्राज्ञाः साधनमादितः परिणतौ प्राहुः फलं तत्स्वयम् ॥ ५ ॥

लोभः कुत्रचिदस्ति कुत्रचिदसौ रोषः परं भीषणः
कुत्राप्येष मनोभवोऽतिमलिने स्वान्ते निशान्ते मम ।
एतस्याप्यहाहाद्रिराजतनुजे कौणे त्वदीयं पदं
खेटीमस्तकलालितं शुचितमं वाञ्छामि कर्तुं खलः ॥ ६ ॥

कन्दर्पेण निवारितं प्रहसता लोभेन निर्भर्सितं
मात्सर्येण तिरस्कृतं मदमहानागेन चाऽभिद्रुतम् ।
दुर्भ्रान्त्या गलहस्तितं बत पुनः क्रोधेन धूतं बला-
दप्येतत्पदमम्ब ते विशति मे चेतोऽस्य वर्ण्या कृपा ॥ ७ ॥

उद्दीप्यन्नखरांशुजालजटिलः त्वत्पादकंठीरवो
यावन्मीलितलोचनः शशिकलाचूडामणेर्वल्लभे ।

तावल्लोभकिटिर्विखेलति मदं पुष्णाति कामद्विपो
रोषद्वीपिपतिश्च गर्जतितरां मन्मानसे कानने ॥ ८ ॥
चांचल्यं हृदयस्य नश्यति कथं युष्मत्प्रसादं विना
त्वं त्वा देवि कथं प्रसीदसि यदि स्थैर्यादपेतं मनः ।
अन्योन्याश्रयदोष एष सुमहानन्यं विधिं स्थापय-
त्यस्माकं वरदे तवोत करुणां निर्हेतुकां जन्तुषु ॥ ९ ॥
भक्तिर्मे त्वयि भर्गपत्नी महती ध्यातुं च वाञ्छामि ते
पादाम्भोजयुगं तथापि चलतां चेतो न मे मुञ्चति ।
कामाः सन्ति सहस्रशः नगसुते पश्चाद्ब्रवीम्यग्रतः
चित्तस्य स्थिरतां प्रदेहि करुणा यद्यस्ति ते वस्तुतः ॥ १० ॥

## पञ्चमं दशकम्

उडुराज कलाकलाप कान्ते सदये सुन्दरि कोमलाङ्घ्रि मातः ।
श्रुतिपद्मदृशा ततं सितं ते पदपद्मं प्रतिभातु मानसे मे ॥ १ ॥
अरुणाचलनाथ सद्मनाथे चरितं ते चरणस्य धात्रि चित्रम् ।
क्रियतेऽब्जसनाभिनामुनाय द्रुतपंके मुनिमानसे निवासः ॥ २ ॥
चरितं चरणाम्बुजन्मनस्ते परमं विस्मयमाननोति मातः ।
अतिरागवदप्यदो विधत्ते सहवासेन यदन्तरं विरागम् ॥ ३ ॥
भवभामिनि कर्मशर्मदातुः भवदीयस्य पदस्य विस्मयाय ।
अपि धूलिविधूसरं विधत्ते यदिदं वीतरजो मनो मुनीनाम् ॥ ४ ॥
चरणं जगदम्ब कैटभारिर्यतमानोपि ददर्श नैव यस्य ।
स विभुस्तव दृश्यते विलग्नश्चरणे चण्डचराचराधिनाथः ॥ ५ ॥
कमलासन कंजलोचनादीनवमत्य त्रिदशान्नगेशकन्ये ।
अगुणे रमसे नगेऽत्र शोणे क गुणान्पश्यति जातिपक्षपातः ॥ ६ ॥

कुसुमादपि कोमलं वपु स्ते हृदयेश स्त्वरुणो गिरिः कठोरः ।
प्रचलाखुतुरंगमस्य मातः समनुध्याय बिभेमि चेतसेदम् ॥ ७ ॥
य दसौ विहितः सितोऽरुणाद्रिस्तव हासेन सितेन नात्र चित्रम् ।
इदमद्भुतमस्य मानसं य द्विमलं पार्वति नीयतेऽतिरागम् ॥ ८ ॥
नवकुंकुमरेणुपंकिलस्य स्मरणात्ते सततं स्तनांचलस्य ।
स्वयमप्यचलो बभूव शोणः शशिधारी जगतां सवित्रिशंके ॥ ९ ॥
स्मरणादरुणाचलस्य मुक्तिः कथमश्लीलकपालभूषणस्य ।
वपुषोऽर्धममुष्यचेन्नचेतस्तिमिरध्वंसिनि सर्वमंगले त्वम् ॥ १० ॥

## षष्ठं दशकम्

गौरि चंडि कालिके गणाधिनायकाम्बिके स्कन्दमात रिन्दुखंडशेखरे परात्परे ।
वज्रनायिके प्रपंचराज्ञि हैमवत्युमे भर्गपत्नि पालयेति गीयतां सदा सखे ॥१॥
वासुदेव वासवादि देव मौलिविस्फुर द्रत्नजाल रश्मिजात रंजितांघ्रिपंकजे ।
शीतभामुबालचूड चित्तजालडोलिके शैलपालबालिके सदा वदामि नाम ते ॥२॥
कल्पवल्लि गायतां नितंबिनीमतल्लिके नाम ते विपश्चितो निरन्तरं गृणन्ति ये ।
दैत्यजैत्रि लोकधात्रि रात्रिराणिभानने शैलवंश वैजयन्ति जन्तवो जयन्ति ते ॥३॥
आनने त्वदीयनाम पावनाच्च पावनं यस्य पुण्यपूरुषस्य पूरुषार्धविग्रहे ।
सानुमन्महेन्द्रपुत्रि संमदाय भूयसे बंधनालयोपि तस्य नन्दनं वनं यथा ॥४॥
नामकीर्तनेषु या षडाननस्य षड्विधात्
शब्दतो पि भाषितात्पृथक्पदा भिशोभितात् ।
उन्नतैकनादतो गजाननस्य बृंहितात्
तृप्तिमेति पुत्रयोः समापि सा जयत्युमा ॥ ५ ॥
मुग्धमित्रमानसे महान्धकारबन्धुरे निद्रितामुमां निजे बहिर्गवेषय स्यहो ।
तत्प्रविश्य पश्य वेददीपकेन तां ततः तारशब्दबोधितां विहाय साधयामृतम् ॥६॥

आदिमो विभोः सुतो यदीयमूलमाश्रितः कुञ्जराननो बिभर्ति सा लता तनौ तता ।
अग्रतो ददाति किंचिदम्बुजं मरन्दवत्तत्र शक्तिरुत्तमा प्रबोधयन्ति तां विदः ॥७॥

द्वादशान्तशायिनी हृदम्बुजान्तरस्थिता मंडलद्वयालया सिताद्रिशृंगचारिणी ।
सर्वभूतजालभर्तुरासनार्धभागिनी भूतिमुत्तमां तनोतु भूभृतः सुता तव ॥८॥

क्षत्रमर्दनप्रसूरसूरिलोकदुर्गमा दुर्गमाटवीविहारलालसा मदालसा ।
नित्यशक्तिपौरुषा ममांघ्रिमूलवासिनः सत्यकीर्ति रार्तिजालहारिणी हर त्वघम् ॥९॥

शक्तिधारिणः सवित्रि सर्वशक्तिमत्युमे भक्तिमज्जनोग्रपापनिग्रहे धृतग्रहे ।
देवमौलिरत्नकान्तिधौतपादुकाय ते सर्वमङ्गलाय मदीयमात्मना सहार्प्यते ॥१०॥



## सप्तमं दशकम्

जंभारिमुख्यसुरसंभाविता बहुलदंभात्मना मसुलभा
पुंभावदप्त सनिशुंभादिबन्धुगणशुंभासुरेन्द्रदमनी ।
कुंभापहासिकुचकुंभा नभोरुजितरंभाऽनुरक्तहृदया
शंभा विभेन्द्रमुखडिंभा करोतु तव शं भामिनीमणिरुमा ॥ १ ॥

तारावलीतुलितहारालि शोभिकुचभराऽलसालसगतिः
धाराधराभकचभारा सुपर्वरिपुवीराभिमानशमनी ।
नीराटकेतुशरधाराभदृष्टिरतिधीरा धराधरसुता
वाराणसीवसति वाराशितूर्णरति राराध्यता मयि सखे ॥ २ ॥

ख्याता मुनीन्द्रजनगीता मयूरहयपोताऽतिचित्रचरिता
शीताचलाधिपतिजाता प्रभातयमताताविशेषचरणा ।
पूता पिनाकधरपीताधरा त्रिदिवपातालभूतलजुषां
सा तापजातमविगीताऽखिलं हरतु माता कटाक्षकलया ॥ ३ ॥

खण्डामृतद्युतिशिखण्डा महोग्रतरभण्डादिदैत्यदमनी
चण्डानलाढ्यकुलकुण्डालया विहितदंडाखलाय भुवने ।

शुण्डालभूमिपतितुण्डाधिभूततरुषण्डा चलाण्डघटभृत्
पिण्डायिता सकलपिण्डान्तरस्थमणिभाण्डायिताऽस्तु शरणम् ॥४॥
राकासुधाकरसमाकारहासधुतभीका भवाब्धितरणे
नौका कटाक्षधुतशोका महामहिमपाकारिणाऽपि विनुता ।
एकाम्बिका सकललोकावले रवलतोकायिता खिलघन-
श्रीका नतस्य मम सा कालिका कमलनीकाशदृक् दिशतु शम् ॥ ५ ॥
नीलालका मधुरशीला विधूतरिपुजाला विलासवसतिः
लोला दृशोः कनकमालावती विबुधलीलावती परिवृता ।
कीलालजाप्रमुखहेला जितामृतकरेलातले निवसतां
शालारुचा मजिनचेलाऽबला कपटकोटानुजा दिशतु शम् ॥ ६ ॥
अव्यादुदारतरपव्यायुधप्रभृति हव्याशि कीर्तितगुणा
गव्याज्यसंमिलितकव्याशिलोकनुतभव्याऽतिपावनकथा ।
श्रव्यासदाविविधनव्यावतारवरकव्यारभस्वभिरता-
दिव्याकृतिस्तरुणरव्याभपादखिलमव्यात्मजा तव कुलम् ॥ ७ ॥
दोषाकरार्भकविभूषा कटाक्षधुतदोषा निरन्तरमन-
स्तोषा परा कलुषकाषायधारियतिवेषाऽनवाप्यचरणा ।
भाषावधूदयितशेषाहिशायिविनुतैषा विषादशमनी
पोषाय पापततिशोषाय चाऽस्तु कुलयोषा भवस्य भवताम् ॥ ८ ॥
वन्दारुसाधुजनमन्दारवल्लि ररविन्दाभ दीर्घनयना
कुन्दालिकल्परदबृन्दा पदाब्जनतबृन्दारकेन्दुवदना ।
मन्दा गता बलममन्दा मतौ जितमुकुन्दाऽसुरप्रशमनी
नन्दात्मजा दिशतु शं दारुणाघततिभिन्दान नामनिवहा ॥ ९ ॥
श्यामा कदंबवनधामा भवार्तिहरनामा नमज्जनहिता
भीमा रणेषु सुरभामावतंससुमधामानुवासितपदा ।
कामाहितस्य कृतकामा किलालमभिरामा रमालयमुखी
क्षेमाय मे भवतु वामा कदंबकललामायिता भगवती ॥ १० ॥



## अष्टमं दशकम्

जलरुहं दहरं समुपाश्रिता जलचरध्वज सूदनसुन्दरी ।
हरतु बोधदृगावरणं तमो हृदयगं हसितेन सितेन ते ॥ १ ॥
नमद मर्त्यकिरीटकृतैः किणैः कमठपृष्ठनिभे प्रपदेऽङ्किता ।
अजिनचेल वधूर्विदधातु मे वृजिनजालमजालमविक्रमम् ॥ २ ॥
ललितयानतपालनलोलया प्रमथनाथ मनोहरलीलया ।
किरिमुखीमुखशक्त्युपजीव्यया विदितयादितया गतिमानहम् ॥ ३ ॥
अमृतदीधिति पोतवतंसया कृतपदानतपापनिरासया ।
गतिमदर्थनराकृतिचित्रया भुवनमेव न मे कुलमार्यया ॥ ४ ॥
अगणयं न च गोष्पदवद्यदि त्रिभुवनं कुतले न तरामि किम् ।
शरणवानहमुत्तमभावया गिरिजया रिजयावितदेवया ॥ ५ ॥
सकरुणा कुशलं तव रेणुका तनु रुमा तनुता दुदितो यतः ।
अवतरः सहते स्म सनासुभिः मुररिपो ररिपोतमपि स्थितम् ॥ ६ ॥
दशरथात्मजपूजितमीश्वरं विदधती रतिनाथवशं गतम् ।
दिशतु नः कुशलं नगवर्धनी हरिहयारिहयान मृगेश्वरा ॥ ७ ॥
जननि शुंभनिशुंभमहासुरोन्मथत विश्रुतविक्रमया त्वया ।
जगदरक्ष्यत गोपकुलेशितुः तनुजयानुजयार्जुनसारथेः ॥ ८ ॥
चरणयोर्धृतया विजयामहे जगति माररिपुप्रियभामया ।
शशिकलामल मन्दरहासया नगजया गजयानविलासया ॥ ९ ॥
इममगाधिपनन्दिनि कल्किनं रुषमपोह्य हरस्य विलोकितैः ।
कलुषनाशनभीमदृशोल्लसन्मदनकैरवकैरव लोचने ॥ १० ॥

---

## नवमं दशकम्

स जयति पुण्यकुलेपु भ्राम्य न्गणनाथ मातुरालोकः ।
य मनुचरतो जनार्दन कुलतरुणी देवता च गिराम् ॥ १ ॥

कस्य प्रबलप्रतिभट भुजकंडूवारणं महद्वीर्यम् ।
कस्य गिरामिह सर्गो युगस्य परिवर्तनेऽपि पटुः ॥ २ ॥
कस्य पुनरन्तरात्मनि संगसहस्रैरचालिता निष्ठा ।
धूर्जटिदयिते युष्मद् दृगन्तभृतमन्तरा धन्यम् ॥ ३ ॥
यस्य निदानमविद्या ममकारः पूर्वरूपमंकुरितः ।
रूपं तापत्रितयं सत्संगः किंचिदुपशान्त्यै ॥ ४ ॥
अन्तःकरणं स्थानं प्रकोपनो विषयपंचकाभ्यासः ।
मुक्तिः सुषुप्तिसमये पुनरागमनाय घोराय ॥ ५ ॥
लोभाभिलाषरोषाः कफमारुतमायवस्त्रयो दोषाः ।
अरुचिः पथ्ये भूयस्यनुबन्धोपद्रवो घोरः ॥ ६ ॥
तस्य प्रयच्छ शमनं संसाराख्यस्य सुमहतो व्याधेः ।
मृत्युंजयस्य भामिनि भेषजमालोकितं नाम ॥ ७ ॥
भवदीयस्य भवानि प्रसिद्धचरिते ते कटाक्षमेघस्य ।
प्रावृट्परितापहृतो भव्यामृतवर्षिणः करुणा ॥ ८ ॥
राजोग्रदृष्टिरुग्रो युवराजः सन्ततं मदोपेतः ।
तव राज्ञि न करुणा चेद्भुवनस्य कथं शुभं भवतु ॥ ९ ॥
राज्ञि तव दृष्टिरवने जागर्ति सतां सदाऽपि खेलन्त्याः ।
तपतोऽपि नित्यमीशो लोलो लीलासु ते भवति ॥ १० ॥

---

## दशमं दशकम्

पदकमलाप्त त्रिकलुष हर्त्री । जयति शिवेति त्रिभुवनभर्त्री ॥ १ ॥
अधितनुदृष्टिस्तटि दधिभूतम् । प्रमदपतेः सा सुदृगधिदैवम् ॥ २ ॥
स्वनयनवृत्तौ स्थिरचरणानाम् । द्विदलसरोजे भगवति भासि ॥ ३ ॥
दहरसरोजे निहितपदानाम् । द्विदलसरोजा दवतरशि त्वम् ॥ ४ ॥
अग्निकुलकुण्डे धृतचरणानाम् । दशशतपत्रं व्रजसि तपन्ती ॥ ५ ॥
दहरसरोजे दृशमपि हित्वा । विषयपराणां स्खलसि वहिस्त्वम् ॥ ६ ॥

स्खलसि यतस्त्वं स भवति हीनः । विलससि यस्मिन्स खलु महात्मा ॥ ७ ॥
दृशि दृशि चित्त्वं हृदि हृदि सत्ता । प्रतिनरशीर्षं प्रमदकऽसि ॥ ८ ॥
तव लहरीषु त्रिपुरविरोधी । किमिव न चित्रं जननि करोति ॥ ९ ॥
हरशिरसो गौर्यवसि जगत्त्वम् । गणपतिशीर्षा दव मुनिभूमिम् ॥ १० ॥

इति श्रीभगवन्महर्षिरमणाऽन्तेवासिनो वासिष्ठस्य नरसिंहसूनोर्गणपतेः
कृतिः उमाशतकं समाप्तम् ।

# शिवशतकम्

## प्रथमं गीतिदशकम्

श्रियमातनोतु सुकृतं पुष्णातु तान्यघानि मुष्णातु ।
दिशतु च भूयो भूयस्तव भगवानष्टमूर्तिरिष्टानि ॥ १ ॥
प्रकृतिस्वयं वरपतेर्यस्य जटाः शेखरेंदुकपटेन ।
प्रहसंति देवयूनां कल्पस्रगलंकृतान्कचकलापान् ॥ २ ॥
वामार्धधरदंशनवलितायां दक्षिणार्धरदपंक्तौ ।
यस्य विलक्षणमास्यं विलोक्य विजयाऽऽसुविकसितकपोला ॥ ३ ॥
हातनयहासुतेहा प्रियेहतोऽस्म्येष चेति मुखरस्य ।
जगतो दशैव तेने संतापं यस्य न गरलं पीतम् ॥ ४ ॥
यस्य परुषाट्टहासज्वलनेनैवाशिते पुरत्रितये ।
आत्मन्येव पृषत्को जज्वाल निरामिषो द्विषन्नसुरान् ॥ ५ ॥
जनयंति ह्रियमेव त्रिभुवनसंहारशक्तिनाथस्य ।
यस्यांधकादिनिर्जय कथानकान्यमरसमितिगीतानि ॥ ६ ॥
यस्य स्मरापराधा-दुज्झितनिद्रे ललाटजुषि नयने ।
गणयामास विधाता युगान्यतीतानि वेपमानकरः ॥ ७ ॥

रुधिरार्द्रमजिनमंसे परितोंगानिश्मशानभसितरजः ।
कंठे कपालमाला वेषोऽयं यस्य दुरवगाह्यार्थः ॥ ८ ॥
भुवनं भ्ररैः कतिपयैरावृण्वानायुगांतमिव कर्तुम् ।
यस्य जटापटलमिता गंगानार्द्रीचकारकोणमपि ॥ ९ ॥
हित्वा मानसशालां विज्ञानमयेऽवतीर्येनिजरूपे ।
आनंदं पश्यंतो यं मुनयो यांति संसृतेः पारम् ॥ १० ॥



## अथ द्वितीयं उपजातिदशकम्

उमावपुः सौरभमुद्गिरंतो भूषेंदुपीयूषकणान्किरंतः ।
भूतेशचूडासरितस्तवाशु भूयासुरायासहराः समीराः ॥ १ ॥
मुहुर्मुहुर्दिक्षुवमन्नपर्णा धंमिल्लसंतानलतांतगंधम् ।
दुःखानिवोधूर्जटि जाट जूट स्रोतस्विनीवातशिशुर्धुनोतु ॥ २ ॥
आश्लिष्य पीयूषमयूखरेखां गाढं जगद्राजजटानिकुंजे ।
बहिः शनैः संचलितः सुखं वः सुरस्रवंती पवनस्तनोतु ॥ ३ ॥
स्वेदं हरन्नंगभवंगणानां दिनेदिनेंऽगीकृततांडवानाम् ।
युष्माकमेनांसि महेशमौलि - मंदाकिनीमंदमरुत्धुनोतु ॥ ४ ॥
स्विद्यंतितेकंदुककेलिसंगा - दंगानिमातंगमुखस्य मातुः ।
चिरंभजंतः शिवशीर्षगंगा-भंगानिलाः शांतिमितोभणंतु ॥ ५ ॥
भव्यं क्रियाद्रोभवमौलिरंगद्भागीरथीभंगभवः समीरः ।
ललाटलोलानलकानरालानुत्सारयन्यो भजते भवानीम् ॥ ६ ॥
आमंत्र्यगौरीमुखगंधवाहमाभाष्यनागाननकर्णवातम् ।
चलन्नितः शर्वशिरः स्रवंती समीरणः सर्वहिताय भूयात् ॥ ७ ॥
मुदेसतांकैरवबंधुमौलि मौलिस्रवंतीमरुतोऽस्तुगानम् ।
औशीनरंयोयशसाऽत्यशेत भूषाऽहृयेत्रन्नं सकलोऽपि भूत्वा ॥ ८ ॥

भूर्षेंदुरेखाकिरणैर्विभक्तैर्भंगावलीषुद्विगुणीकृताभा ।
भवस्य मौलिंपरितश्चरंती भागीरथी वो विदधातुभद्रम् ॥ ९ ॥
करारविन्देगिरिशस्य खेलन्कुरंगबालः कुशलंक्रियाद्वः ।
विश्वस्य धात्रीनगराजपुत्री यस्मादधीतेतरलेक्षितानि ॥ १० ॥

## अथ तृतीयं रथोद्धतादशकम्

निर्जरस्तुतिकथाप्रसंगतो दक्षिणं श्रवणमद्रि जावते ।
दीनबांधवनिवर्तयक्षणं घोषमेष कुरुते पदानतः ॥ १ ॥
पश्यदेव सकृदेतमर्भकं शीतदीधितिमयेन चक्षुषा ।
तेन सिध्यति परोपकारिता लोकतात तव काऽपि न क्षतिः ॥ २ ॥
अंबराणि हरिदंबरादहं हर्म्यजालमगसानुवासिनः ।
नो वृणोमि कनकंचभिक्षुका दर्थयेसदयमेव वीक्षितम् ॥ ३ ॥
तत्किल प्रभवति क्षितेर्जग त्यंतरिक्षभुवनेऽथवा दिवि ।
कर्तुमप्रतिममात्मगोचरं मौलिभूतमकृतात्मनामपि ॥ ४ ॥
तस्य शक्तिररिलोकदुःसहा तस्य सिद्धिरणिमादिशालिनी ।
तस्य संपदखिलात्मभावदा यं विशोधयति दृष्टिरीशतुः ॥ ५ ॥
याचकः पदसरोजकिंकरो वीक्षितेन खलु साध्यमीप्सितम् ।
अत्र चेद्भवभवान्पराङ्मुखो निर्दयेषु गणनाभवेत्तव ॥ ६ ॥
दृष्टिदानविमुखेन किं त्वया दीयते निजमनामयं पदम् ।
किं ददाति हरसर्वमापणं विण्णिशाशकलदानदुर्मनाः ॥ ७ ॥
किंनु संलपसि शैलकन्यया नंदिना किमु करोषि भाषणम् ।
सर्वलोकजनकप्रभोकुतो नार्भकस्य रुदितं निशम्यते ॥ ८ ॥
संस्तुतो न च दधासि संमदं दूषितो न च महेश लज्जसे ।
अप्यहं चतुरभाषणः कविः किं करोमि विगुणस्यते पुरः ॥ ९ ॥
पाहि वा पशुपते जहीहि वा जीवनं तव पदोः समर्पितम् ।
देहि वा विमुखतामुपेहि वा प्रार्थये किमपि नाथ नापरम् ॥ १० ॥

## अथ चतुर्थं पथ्यावक्त्रदशकम्

किं घोषं कुरुषेद्वारि देहि देहीति भूभुजाम् ।
रसने हर गौरीश पाहि पाहीतिगीयताम् ॥ १ ॥
कर्तुंकाव्यानि नव्यानि व्यसनंरसने यदि ।
नकिं संति चरित्राणि पवित्राणि पिनाकिनः ॥ २ ॥
सुतरां सुलभो मोक्षो कीर्तनात्कृत्तिवाससः ।
उपायमविदित्वैतमपायं यांति जंतवः ॥ ३ ॥
सुधाधोऽधरः स्त्रीणां सुधातोयधरः कविः ।
सुधातरंगमालीते नामध्वनिरुमापते ॥ ४ ॥
किंचिदस्त्यधरे स्त्रीणां सुधायामस्ति वा न वा ।
माधुर्यमंधकारातेर्नामधेये विशेषतः ॥ ५ ॥
अस्माकमाकुलं पापैः प्रायश्चित्तंविदूयते ।
हरसंकीर्तनं तेषां प्रायश्चित्तं विधीयते ॥ ६ ॥
शंभोरंभोरुहाकारं चरणं शरणं सताम् ।
अंहसंहारमाधातुं नमतेः कर्म कुर्महे ॥ ७ ॥
पापदूरमितो याहि समाप्ता ते मयि स्थितिः ।
पदपद्मं पुरारातेः सांप्रतं संप्रणम्यते ॥ ८ ॥
करणे सर्वसौख्यानां हरणे वाऽखिलैनसाम् ।
नास्ति मे मदनारातेः पदनालीकतः परम् ॥ ९ ॥
पारिजातमहेशांघ्री दातारौ भवतः समौ ।
उदग्रीवैः प्राप्यते तस्मान्नतग्रीवैरितः फलम् ॥ १० ॥



## अथ पंचमं भुजगशिशुभृतावृत्तं दशकम्

अभयवरवतः पाण्योरमृतकरवतो मौलौ ।
अखिलभुवनसम्राजश्चरणसरसिजं सेवे ॥ १ ॥

तवगरलवतः कंठाद्विगलति यदि पीयूषम् ।
अभयमजरनोचित्रं भुजगवलयितात्पाणेः ॥ २ ॥
निजविषयपरंचित्तं शिवचरणपरं चित्तम् ।
इह जगति सतां येषां जयति चरितमेतेषाम् ॥ ३ ॥
भुवनजनककारुण्यान्न किमपि परमाप्नव्यम् ।
प्रसरतियदितत्पूर्णं सकलमपि च संपूर्णम् ॥ ४ ॥
जगदिदमतिदौर्गुण्यं विषयविषधरारण्यम् ।
हर तव चरणध्यानं वरमति कुसुमोद्यानम् ॥ ५ ॥
शुचितरहृदयांगारो नयनरुचिशिखोद्दीप्तः ।
परमशिवविमर्शोग्निः प्रभवति दुरितं दग्धुम् ॥ ६ ॥
असिभुविभवहव्याशी हरनभसिशाचीनाथः ।
दिविमृडमहसामीशो जयसि च शिवसद्रूपः ॥ ७ ॥
इह तव महिषीधेनुर्नभसि सहचरी शक्तिः ।
उपरि तु ललनाछायात्रयमिदमखिलाराध्यम् ॥ ८ ॥
सुरपतिरितरोनत्पन्मधुरिपुररुणश्चैकः ।
शतधृतिरनलोनद्धो पुरहर विदितं वेद्यम् ॥ ९ ॥
त्वमजरमरुतामात्मा दिनकृतिवसतां विष्णुः ।
इह भुवि भवतां ब्रह्मा पृथगपि पुरुषायूयम् ॥ १० ॥



## अथ षष्ठमौपच्छंदसिकदशकम्

जगदेतदनारतं पचंतं महतोऽस्मादपि पुष्करान्महांतम् ।
तपसा निरुपाधिकेन गम्यं परमात्मानमजं शिवाख्यमीडे ॥ १ ॥
सदलंकृतियुक्तयासुकांत्या हृदयाकर्षकभावयागुणज्ञम् ।
शिवमीशमहंगिरोपतिष्ठे नृपतिं कन्यकयेववैभवार्थी ॥ २ ॥
मम मंगलमातनोतु भास्वत्करधौताहरितः शुचीर्वसानः ।
शशिनामुकुटीदिवाजटावांस्तिलकीहव्यभुजाविभुर्विभूनाम् ॥ ३ ॥

अपि निष्करुणस्य मानसंचे - दूद्रवतिप्रार्थनयेहदुर्गतानाम् ।
करुणावरुणालयस्य चित्ते भवतः को भवसंशयं विधत्ते ॥ ४ ॥
स्मरणे तवसंचलंतियूथान्युरुकीर्तेहृदयान्मनोरथानाम् ।
अनिवार्यगतीनिशीतभानो खलोकेजलधेर्यथाजलानि ॥ ५ ॥
परिणीतिगृहेमहेशपूर्णे परितो बंधुजनैर्वरस्य साम्यम् ।
हृदये परिपूरितेऽत्रकामैस्तव पादस्तुजपेदधातिमृग्यः ॥ ६ ॥
तवमंत्रमुदीक्षतेमनश्चेदचलंकानिचिदक्षराणि तानि ।
अथ ते सुगुणानगोचरास्ते विधयानाथकया भजेमहि त्वाम् ॥ ७ ॥
धवलाकृतिरुच्यसेंऽगकैश्चित् भणितः कैश्चननीललोहितस्त्वम् ।
अपरेहरकृष्णपिंगलं त्वां विदुरन्येप्रवदंतिकांचनाभम् ॥ ८ ॥
मनसा परिकल्पितानि संतस्तव रूपाणि यथेष्टमामनंतः ।
महते खलु संशयायनॄणामभवन्केन निरूपयेमसत्यम् ॥ ९ ॥
अथवा भगवन्निराकृतिस्त्वं प्रभवस्याकृतिमीप्सितां च धर्तुम् ।
इयती खलुचर्ययेतिको वा तवमायां विबुधः प्रवक्तुमीष्टे ॥ १० ॥



## अथ सप्तमं शशिवदनादशकम्

अमृतमयूखं मुकुटमनर्धम् । जयतिदधानो जगदधिराजः ॥ १ ॥
सकलबुधौघे विफलविधाने । असति शरण्ये मतिमतिगण्ये ॥ २ ॥
दुरितविसार प्रतमसिलोके । ऋषिकुलजानां सदसिसशोके ॥ ३ ॥
अतिदुरदृष्टान्नरनियुतेषु । अपिमितमत्तुं धनरहितेषु ॥ ४ ॥
उदितविरोधा स्वयुतभिदासु । चतसृषुजातिष्वबलतमासु ॥ ५ ॥
मुहुरयिलोलेक्षितिसुरशोले । अजगणकल्पे भुजभवसंघे ॥ ६ ॥
चतुरविरोधि व्रजहितसाराम् । अविरतनेत्र स्नुतजलधाराम् ॥ ७ ॥
भरतधरित्रीं भुवन नृपालः । अवतु दयालुः सितगिरिशालः ॥ ८ ॥
अरुणधरित्री धरहरदूनाम् । भरतधरित्री मवशिवदीनाम् ॥ ९ ॥
हरभरतक्ष्मा जनवरदूतम् । कुरुचरितार्थं गणपतिमेतम् ॥ १० ॥



## अथाष्टमं तनुमध्यादशकम्

पाता भुवनानां धाता च विधाता । नेता प्रमथानां त्राता भवतान्नः ॥ १ ॥
कर्ता भुवनानां भर्ताऽपि चहर्ता । ख्यातोऽवतु देवस्तातो मरुतां नः ॥ २ ॥
कर्तुं भुवनं वाग्भर्तुं भवभाते । हर्तुं खलु भद्रा योगामलनिद्रा ॥ ३ ॥
मेयः शिवसर्वो गोलात्मकलोकः । सीमारहितोऽसा वेकस्तवनाकः ॥ ४ ॥
आत्मानमुताहो तातं खचराणाम् । आहोस्विदधीशं ध्यायामि सुराणाम् ॥ ५ ॥
तं व्योमचराणां जीवं पवमानम् । तातं शिवमाहुर्नाथं मघवानम् ॥ ६ ॥
अभ्रे विचरंतं भांतं निनदंतम् । अस्मत्पितरं तं वंदे भगवंतम् ॥ ७ ॥
यांतं पवमानं भांतं मघवानम् । नाके निनदं तं गायंति शिवं तम् ॥ ८ ॥
भातो गगनाग्नेर्यातः पवनस्य । तारस्य च रूपं नानेकमपापम् ॥ ९ ॥
लक्ष्मीपतिसंख्या यावद्रविलोकम् । गौरीपतिरेको राजत्यधिनाकम् ॥ १० ॥

---

## अथ नवमं सुमतीदशकम्

नित्यं स्वरतियो व्याप्याश्रमखिलम् । गायंति कवयस्तं तारममलम् ॥ १ ॥
तारा ह्ययवपुः शंभोरभयदम् । भानोः किरणवद्वै भूतिकमिदम् ॥ २ ॥
तं पुष्करगुणं गायंतु बहवः । सत्वग्निरजरो दिव्यः शिवरवः ॥ ३ ॥
यद्रोदितिवियद्ध्वोनवरतम् । भद्रं बुधगणो रुद्रं भणतिं तम् ॥ ४ ॥
तारः सगगने नत्वेवमरुताम् । सर्वत्र च महान्प्राणो जनिमताम् ॥ ५ ॥
तस्यैव गगने प्राणस्य चरतः । भंगाः पुनरिमे वाताः कुमभितः ॥ ६ ॥
रुद्रः सनिनदन्राजंत्समघवा । वातः सविचरन्नित्यं दिवि युवा ॥ ७ ॥
एवं गुणवशादेकस्य बहुता । उग्रस्य जगतां राज्ञो निगदिता ॥ ८ ॥
व्याप्तो दिवि सतश्चिद्वह्निरतुलः । नामांतरवशात्ताराग्निरमलः ॥ ९ ॥
आक्रम्य सकलं भांतं बहुबलम् । गायामि विमलं चिद्वह्निमतुलम् ॥ १० ॥

# अथ दशमं शार्दूलविक्रीडितं दशकम्

यः प्रज्ञानमयोयमाहुरजरं येनाभितः स्थीयते ।
यस्मै कर्मसमर्पयंति मुनयो यस्मात्परो नापरः ॥
यस्या सावसुरंबरेत्त यतिनः प्राणां दधानो रविः ।
यस्मिन्प्रोतमिदं समस्तभुवनं कस्यैचिदस्मै नमः ॥ १ ॥
कन्याशीतगिरेरियं सुललितैर्गोत्रैरियं भामिनी ।
मातेयं गजवक्त्र तारकजितोरित्यल्पदृष्टेः कथाः ॥
सर्वस्मिन्नचरे चरेचविभवादेकापरा जाग्रती ।
शक्तिः काचन सा विचाररसिकैराराध्यते नाथ ते ॥ २ ॥
केषांचित्त्स हिरण्मयोमतिमतां कृष्णः परेषां विदा ।
मन्येषां विदुषां सुधांशुधवलस्त्वेधापरेषां परः ॥
केपि स्थूलदृशां जगत्पतिवपुर्ध्योनायकल्पा इमे ।
सत्यं तु ब्वलदव्यबाध्यमभितोगूढं गुहायामिव ॥ ३ ॥
सौरं मंडलमुज्ज्वलं तव तपः श्वासश्चरन्मारुतो ।
बिंबं मेचकतोयजातसुहृदो मंदस्मितं सुंदरम् ॥
चित्रं कंदुकखेलनं वसुमतीलोकस्यतिर्यग्भ्रमिः ।
कोवा भाषितुमीशते प्रभवतिस्वल्पश्रुतो वैभवम् ॥ ४ ॥
संश्लिष्यन्प्रकृतिं रजोगुणमयीं देहेविराड्भण्यसे ।
बिंबेऽर्कस्य हिरण्यगर्भ उदितः शुद्धांश्रितः सात्विकीम् ॥
ईशस्त्वं परतामसीमुपगतो गुप्तान्नभस्युच्यसे ।
धेनुः श्रीर्गिरि जेतिशाक्तसमये यस्यास्त्रिधा विश्रुतिः ॥ ५ ॥
ऊर्ध्वं भासिहिरण्ययांगसकलप्राणेरवेर्मंडले ।
लोकेचध्वनिधाम्निरुद्रमरुतामंतः समुद्योतसे ॥
अस्माकं हृदयेषु च क्षितिजुषां वैश्वानरभ्राजसे ।
शेषं सर्वमिदं पचन्नपिपरव्याप्तोऽभितोवर्तसे ॥ ६ ॥
भूतत्वं तव शैलजात्वमपितेशक्तेः प्रभो पंडिताः ।
चातुर्येण समर्थयंति युवयोर्लीलाशरीरग्रहम् ॥

केचिद्विग्रहकल्पनं जडधियामर्थेकृतं साधय-
न्त्यन्येऽशावतरं भणंतिभणितं भाक्तं परेमन्वते ॥ ७ ॥
माहात्म्यं तव वक्तुकः पशुपतेयद्रोमतुल्यं महः ।
ब्रह्मांडं चरितानिवेदतवकः सर्वांतरोभासियः ॥
यागं को विदधातु ते वरदकैर्यस्य स्वमेवाखिलम् ।
नामैकं तव सूरिभिः प्रकटितं क्तं हृदादिश्रये ॥ ८ ॥
द्राक्षामाक्षिपतिक्षिणोति मधुनोदर्पंसितांनिंदति ।
क्षीरंनोबहुमन्यते प्रशमयत्यग्र्यं सुधाया यशः ॥
किंवाह्वयत्कथयामतं च घृणयाकांताऽधरं वीक्षते ।
प्राप्तो जन्मसभक्तवक्त्र कमलान्नामध्वनिर्नाथ ते ॥ ९ ॥
किं यागैरतिदारुणैनतपसा किंवा किमभ्यर्चनैः ।
एकालोक हितंकरीविजयतेमुक्तेरुपायः परः ॥
कामारे करुणानिधे पशुपते भूतेशगौरीपते ।
शंभो शंकर चंद्र चूड जगतां नाथेति नामावली ॥ १० ॥

इति श्रीभगवन्महर्षिरमणांतेवासिनो वासिष्ठस्य नरसिंहसूनोः काव्यकंठपदलांछनस्य गणपतेः कृतिः शिवशतकं समाप्तम् ॥



# सदाचारबोधिनी

## प्रथमोऽध्यायः

देवं वृषं नमस्कृत्य जगदीशस्य वाहनम् ।
सारं संगृह्य शास्त्रेभ्यः सदाचारं प्रचक्ष्महे ॥ १ ॥

गीतोबहु विभूतिर्योमंत्रकृद्भिर्महर्षिभिः ।
ईश्वरः सर्वभूतानां भक्तिस्तत्रवृषः परः ॥ २ ॥

तद्रूपशक्तिकल्याणगुणलीलाकथास्मृतिः ।
अच्छिन्नातैलधारावत्प्रीत्यात्माभक्तिरुच्यते ॥ ३ ॥

दीनाः शरणमिच्छंतो ये वर्तंते शरीरिणः ।
विदधीतदयांतेषु तत्पुण्यं परमं विदुः ॥ ४ ॥

योषायां विधिनोढायां भजंत्यां भिक्षुकेतरः ।
अनुरक्तोभवेत्प्राज्ञः सा मर्यादा सनातनी ॥ ५ ॥

सर्वेष्वन्येषु भूतेषु स्त्रीषु वा पुरुषेषु वा ।
स्निग्धचित्तोभवेन्मर्त्यस्तं धर्मं परमं विदुः ॥ ६ ॥

असंगश्च ससंगश्च स्नेहस्तु द्विविधो मतः ।
असंगस्य जनाः पात्रमसंतोऽन्यस्य सज्जनाः ॥ ७ ॥

नाभिध्यायेत्कचिद्रोहं परेषां पंडितो जनः ।
अभिध्यां संप्रभाषंते पंडिताः पातकं महत् ॥ ८ ॥

परेषां द्रविणेष्विच्छां नैव कुयादधर्मतः ।
परद्रव्याण्यधर्मेणवांच्छन्नशुभमाप्नुयात् ॥ ९ ॥

परेषां तेजसालक्ष्म्या विद्ययोत प्रभावतः ।
असूयाकुलितोनस्यात्माहि देहविशोषणी ॥ १० ॥

वृथा गुरून्न शंकेत मित्राणि तनयान्वधूम् ।
प्रेष्यान्वाबुद्धिमान्मर्त्यो विनाकिंचिन्निदर्शनम् ॥ ११ ॥

परेषां कुलनारीषु नाभिलाषः प्रशस्यते ।
कुलद्वयस्य कल्याणं प्रतिषेद्धुंहि सक्षमः ॥ १२ ॥

न किंचिदवमन्येत मनसादेहधारिणम् ।
देहे सर्वस्य जीवाख्यो लोकनाथोह्यवस्थितः ॥ १३ ॥

यः क्रोधस्यस्थितिं दद्यान्मनसि क्षणमप्यधीः ।
स दग्धसर्वसुगुणः पुरुषो भवति ध्रुवम् ॥ १४ ॥
धरण्याः सागरांताया भर्तासन्नपि मानवः ।
न गर्वं मनसागच्छेद्गर्वितोहि प्रणश्यति ॥ १५ ॥
परेषां जातुचिद्दोषांश्चिंतयेन्नविचक्षणः ।
आत्मानं योजयेद्दोषैः परदोषानुचिंतनम् ॥ १६ ॥
मोहान्नापरमज्ञानं सहेतुः संसृतेः परः ।
अनात्मन्यात्मबुद्धिर्या तां मोहं कवयो विदुः ॥ १७ ॥
न मुधा विषयान्ध्यायेत्तत्संगस्य हिकारणम् ।
चित्त संगेन संस्पृष्टे किं पापं नाचरेज्जनः ॥ १८ ॥
वेदनाम्नि ब्रह्मकोशे नाविश्वासो न गर्हितः ।
प्रत्यक्षादनुमानाच्च प्रामाण्यं तत्र वर्तते ॥ १९ ॥
द्वादशेमान्महादोषान्महात्मा यो विवर्जयेत् ।
पातकानां दुराधर्षः स विशुद्धतमो भवेत् ॥ २० ॥



## द्वितीयोऽध्यायः

नित्यं स्नानं नरः कुर्यान्निशापाये प्रयत्नतः ।
तद्धि कांतिप्रदं वृष्यं कंडूदाहनिवारणम् ॥ १ ॥
स्त्रियं परस्य नालिंगेत्कामतः साहि दारुणा ।
आश्लेषाद्भस्मसात्कुर्याद्यशः पुण्यं च देहिनाम् ॥ २ ॥
सर्वस्वभावतः पश्येदृजुना चक्षुषा जनः ।
सर्वः करोति विश्वासमृजुदर्शिनि मानवे ॥ ३ ॥
न लोके तान्यमन्यांवासविकारमुदारधीः ।
अर्हपात्रगतप्रीतेः शुद्धाया उदयादृते ॥ ४ ॥
पुण्यश्लोकचरित्राणि स्तोत्राणि च सुपर्वणाम् ।
तत्त्वानि च पदार्थानां सक्त आकर्णयेत्सुधीः ॥ ५ ॥
नाकर्णयेत्सतां निंदां गुरूणामीश्वरस्य वा ।
वेदानां तापसानां वा विद्वानपसरेत्ततः ॥ ६ ॥

हृद्यं च मेध्यमायुष्यं देवताभ्यो निवेदितम् ।
संविभक्तं तदर्हेभ्योमितमद्याच्छरीरभृत् ॥ ७ ॥
वस्तूनि लशुनादीनि वर्ज्यान्याहुर्मनीषिणः ।
प्रतिहंतुमलं तानि प्रतिभानं शरीरिणाम् ॥ ८ ॥
नाद्यादुच्छिष्टमन्यस्य मातरं पितरं विना ।
विनागुरून्विनासिद्धान्विनाप्राणप्रियं जनम् ॥ ९ ॥
नाद्यान्नरः प्रत्युषितं विनिष्कांतो रसो यतः ।
नीरसानां पदार्थानामशनं कृंतनं धियः ॥ १० ॥
वर्जनीयासुरासद्भिस्तां दोषाणां विदुर्निधिम् ।
यच्चाप्यन्यन्मदकरं तच्च सर्वं विवर्जयेत् ॥ ११ ॥
दोषा बह्वशने प्रोक्ता बहवो धर्मवेदिभिः ।
तस्माद्बह्वशनं वर्ज्यं सता श्रेयोभिलाषिणा ॥ १२ ॥
मांसं योऽन्यस्य मांसेन क्रूरः स्वं परिरक्षति ।
तस्य धर्मश्च बुद्धिश्च दूरतो द्वितीयं भवेत् ॥ १३ ॥
सुगंधी निनिषेवेत वस्तूनि सततं कृती ।
सुगंधिषु पदार्थेषु कमला हि प्रतिष्ठिता ॥ १४ ॥
दुर्गंधीनि न सेवेत कृती वस्तूनि जातुचित् ।
प्रतिहंतुमलं तानि प्रतिभानं शरीरिणाम् ॥ १५ ॥

---

## तृतीयोऽध्यायः

सत्यं स्वर्गस्य सोपानं सत्यं पुण्यं परं मतम् ।
सत्ये रमंते धीमंतस्तस्मात्सत्यं वचो वदेत् ॥ १ ॥
प्रियं हृद्यं समस्तस्य प्रियं श्रवणयोः सुखम् ।
प्रिये रमंते सर्वेपि तस्माद्वाक्यं प्रियं वदेत् ॥ २ ॥
हितं निवर्तयेन्मर्त्यं दत्तकर्णममार्गतः ।
अग्रतो दत्तकर्णस्य तस्माद्वाक्यं हितं वदेत् ॥ ३ ॥

येनासत्येन सत्यस्य भवति त्राणमंगिनः ।
तदसत्यं वचोदुष्टं नेतिदूरदृशो विदुः ॥ ४ ॥
येनसत्येन सत्यस्य भविताह्यानिरंगिनः ।
न वदेत्पंडितोमर्त्यस्तत्सत्यमनृतं यथा ॥ ५ ॥
स्तोत्राणि यानि प्रोक्तानि मुनिभिस्तत्वदर्शिभिः ।
यथावकाशं गेयानि तानि श्रेयोऽभिलाषिणा ॥ ६ ॥
पुण्यश्लोकचरित्राणि गीतानि कविसत्तमैः ।
यथावकाशं गेयानि तेषूत्साहः प्रतिष्ठितः ॥ ७ ॥
सत्यो नार्यः सुराः सर्वे महात्मानश्च तापसाः ।
रक्षितारश्च राजानः पुण्यश्लोका उदाहृताः ॥ ८ ॥
गायेन्नामानि देवस्य सर्वभूतमहेशितुः ।
गीतो बहुविभूतिर्यो मंत्रकृद्भिर्महर्षिभिः ॥ ९ ॥
असत्यं सर्वपुण्यघ्नमसत्यं पातकं परम् ।
तस्मादसत्यं नो वाच्यं नरैः कल्याणकांक्षिभिः ॥ १० ॥
अप्रियं सर्वमैत्रीघ्नमप्रियं दारुणं परम् ।
नवाच्यमप्रियं तस्मान्नरैः स्नेहाभिलाषिभिः ॥ ११ ॥
अहितं सर्वदुःखानि विधातुं शृण्वतामलम् ।
न वाच्यमहितं तस्मात्परश्रेयोऽभिलाषिभिः ॥ १२ ॥
असंबद्धानि वाक्यानि न वदेत्पंडितो जनः ।
असंबद्धेषु वाक्येषु सर्वे दोषाः प्रतिष्ठिताः ॥ १३ ॥
नाश्लीलं कीर्तयेद्विद्वान्परेषामग्रतः क्वचित् ।
महतीमपि मर्यादामश्लीलं हंति भाषितुः ॥ १४ ॥
न विदध्यात्सतां निंदां गुरूणामीश्वरस्य वा ।
वेदानां तापसानां वा श्रेयस्कामः शरीरभृत् ॥ १५ ॥
आदिशेन्नैव कृत्येषु मातरं पितरं गुरुम् ।
यतिनं तापसंवृद्धं ज्येष्ठं वा भ्रातरं नरः ॥ १६ ॥

नासाधूनां चरित्राणि पठेत्संगेन पंडितः।
साधूनामिव गीतानि कविभिर्लोभदूषितैः ॥ १७ ॥
गायेन्नासंतिगीतानि कामदूषितचेतसाम्।
वेश्यानामसतीनां वा रागो यत्राभिवर्ण्यते ॥ १८ ॥
काले काले नरः कुर्यादादित्यस्य नमस्कृतिम्।
तदंतरेहि विश्वस्य प्रभुः परमपुरुषः ॥ १९ ॥
हुताशनं नमस्कुर्याद्वेदिमध्यगतं जनः।
परस्य ज्योतिषस्तस्य प्रतीकं हि वदंति तम् ॥ २० ॥
नमस्कुर्यादुभे संध्ये शक्तिभूते प्रजापतेः।
अज्ञानेन कृतं पापं दह्यंतीत्यागमा जगुः ॥ २१ ॥
पिताद्यौर्जननीभूमिराचार्यस्तुबृहस्पतिः ।
पूजनीयाः प्रयत्नेन वंदनीयाश्च ते त्रयः ॥ २२ ॥
होतव्यमग्नौ संध्यासु समुद्दिश्येष्टदेवताः।
सा पूजा परमा प्रोक्ता स यज्ञस्तन्महद्व्रतम् ॥ २३ ॥
दद्यादेवयथाशक्ति याचमानाय मानवः।
आख्याता धीमतां श्रेष्ठैर्दाने हि बहवो गुणाः ॥ २४ ॥
न हन्यात्प्राणिनं कंचिद्गोमनुष्यौ विशेषतः।
मनुष्येष्वप्यहिंसस्य हत्या घोरा प्रकीर्तिता ॥ २५ ॥
परस्त्रियं न गृह्णीयात्कामतः सा हि दारुणा।
ग्रहणाद्भस्मसात्कुर्याद्यशः पुण्यं च देहिनाम् ॥ २६ ॥
परस्य न हरेद्वित्तं दरिद्रस्य विशेषतः।
दरिद्रस्य हृतं वित्तं सर्वनाशाय कल्पते ॥ २७ ॥
गच्छेत्तीर्थानि पुण्यानि पुण्यान्यायतनानि च।
पदानताडयेदन्यं तत्परं ह्यवमाननम् ॥ २८ ॥
विसर्गं शकृतः कुर्यान्मनुष्योऽनावृतेस्थले।
प्रायो न तत्र संचारो जनानामुपलभ्यते ॥ २९ ॥

विसर्गं शकृतः कुर्याद्यो मार्गेष्वलसो जनः।
स सर्वैर्घृणयायुक्तैर्महांश्च परिभूयते ॥ ३० ॥

आत्मनः सह धर्मिण्यां रतिं कुर्यादृतावृतौ।
तत्र धर्मश्च कामश्च संततिश्च प्रतिष्ठिताः ॥ ३१ ॥

कृष्णपक्षे चतुर्दश्यामष्टम्यां च कुहूदिने।
संक्रांत्यां पौर्णमास्यां च शस्तं रतिविवर्जनम् ॥ ३२ ॥
व्रती दिनानि मनुजो यावंति व्रतमाचरेत्।
तावंति नैव भार्यायां संप्रसज्येत कर्हिचित् ॥ ३३ ॥

विवर्जयेद्वधूयोगं नरः श्राद्धदिनेष्वपि।
पितरः प्रशपंत्येतं यः शुक्रं तासु मुंचति ॥ ३४ ॥
नरो रजस्वलां भार्यां नैवगच्छेद्दिनत्रये।
अमंगल्यां तदाप्राहुर्नारीं शास्त्रविदो जनाः ॥ ३५ ॥

गृहिणीं न बलाद्गच्छेदनिच्छां रोगकर्शिताम्।
गर्भभारावभुग्नां वा जरतीं वागतार्तवाम् ॥ ३६ ॥
न परस्य स्त्रियं गच्छेत्साग्निज्वाला हि दारुणा।
गमनाद्भस्मसात्कुर्याद्यशः पुण्यं च देहिनाम् ॥ ३७ ॥

मातरं गुरुभार्यां वा गच्छन्पतति मानवः।
भेदो न विद्यते कश्चिच्चतुरंध्रेश्च तस्य च ॥ ३८ ॥
राजभार्या मित्रभार्या भार्यासच्छ्रोत्रियस्य च।
पुत्री च भगिनीश्वश्रूरगम्या गुरुदारवत् ॥ ३९ ॥

कन्यां न दूषयेद्योषां श्रेयस्कामो जनः क्वचित्।
कुप्यंति देवतास्तस्मै कन्या येन प्रदूषिता ॥ ४० ॥

नगच्छेद्विधवां नारीं रक्षन्मंगलमात्मनः।
यदि सा गर्भिणी भ्रूणं हन्यात्तत्रांशभाग्विटः ॥ ४१ ॥
भार्यापुनर्भूर्दिधिषोः स्वीयैव न परांगना।
यद्यग्रेदिधिषुस्तस्यास्तस्य सा तु परांगना ॥ ४२ ॥

क्रीतांधनेन योवेश्यांगच्छेदल्पमतिर्जनः।
न स केवलमर्थेन वर्चसा च वियुज्यते ॥ ४३ ॥
न निषिद्धं न विहितं यत्कर्म तु तदाचरन्।
नैवपापी भवेन्मर्त्यो न भवेदपि पुण्यवान् ॥ ४४ ॥
अनिर्देशो विशेषस्य पुरुषस्तूपलक्षकः।
स्त्रीयोगात्पुंसियत्पापं तत्पुंयोगान्नवास्त्रियाः ॥ ४५ ॥
एतदा चरसामान्यं तप आ चरतोदितम्।
नरसिंहस्य पुत्रेण नरश्रेयोऽभिलाषिणा ॥ ४६ ॥

इति श्रीभगवन्महर्षिरमणांतेऽवासिनो वासिष्ठस्य नरसिंहसूनोर्गणपतेः कृतिः सदाचारबोधिनी समाप्ता।

---

# उपव्याख्यानाष्टकम्

## प्रथमात्मोपव्याख्यानम्

१—एक एवात्मा सर्गात्प्राक्।
२—अनन्तरं परितः पूर्णः शक्त्या।
३—पचतिभुवनान्यजस्रम्।
४—प्राणे तु स्फुरति।
५—तमेकमेवसन्तं वैभवभेदाच्चतुर्धा प्राहुः।
६—मूलभूतं परमात्मानम्।
७—सर्गादनन्तरं तमेव भुवनानि पचन्तमीश्वरम्।
८—ब्रह्माण्डप्राणे रविमण्डले स्फुरन्तं हिरण्यगर्भम्।
९—पिण्डेषु श्रेष्ठे विराजम्।
१०—तदेतन्नवभिः सूत्रैरात्म न उपव्याख्यानं भवति।

## अथ द्वितीयं कालोपव्याख्यानम्

१—आत्मनो दृष्टिः कालः ।

२—दृष्टिर्ज्ञानमव्यक्तः शब्द इत्यनर्थान्तरम् ।

३—अव्यक्तं शब्दायत इत्येव यज्जानातीति ।

४—दृष्टिपदेन संविन्मात्रस्य स्वीकारः ।

५—सान्तर्मुखी प्रतीची ।

६—बहिर्मुखी पराची ।

७—विश्रान्ता शान्तिः ।

८—तासामेतान्यपराणि नाम त्रिकाणि ।

९—प्रज्ञानं विज्ञानं मौनम् ।

१०—योगः सङ्गस्त्यागः ।

११—व्याप्तिर्व्यायाम उपरतिः ।

१२—तासामेकैकां पुनर्वैभवभेदाच्चतुर्धाचतुर्धा व्यवहरन्ति ।

१३—सर्गः स्वप्नस्तपः सायुज्यं चेति प्रतीचीम् ।

१४—स्थितिर्जागरितं कर्मभोगश्चेति पराचीम् ।

१५—प्रलयोनिद्रासंप्रसादोमुक्तिश्चेति विश्रान्ताम् ।

१६—अहर्वा एतद्यत्पराची ।

१७—रात्रिर्वा एषा यद्विश्रान्ता ।

१८—संध्या वा एषा यत्प्रतीची ।

१९—भूतं भवद्भावि च विज्ञानधारा ।

२०—एवं कालस्य द्विधापि त्रित्वं व्याख्यातम् ।

२१—इतोऽन्यो व्यवहारो भाक्तः ।

२२—तदेतदेकविंशत्या सूत्राणां कालोपव्याख्यानं भवति ।

# अथ तृतीयं लोकोपव्याख्यानम्

१—अयं लोकः प्रथमः।

२—अधिपिण्डं शरीरम्।

३—सर्वे ग्रहा आसूर्यचन्द्रा अनेन लोकेन व्याख्याताः।

४—वायुमण्डलं द्वितीयो लोकः।

५—अधिपिण्डं पञ्चात्मकः प्राणः।

६—तृतीयश्चन्द्रमाः।

७—अधिपिण्डं मनः।

८—उपग्रहाः सर्वे चन्द्रमसा व्याख्याताः।

९—चतुर्थोऽसावादित्यः।

१०—अधिपिण्डं विज्ञानम्।

११—अमुनाऽऽदित्येनादित्या अन्ये व्याख्याताः।

१२—पञ्चम आकाशः।

१३—अधिपिण्डं गुहा।

१४—षष्ठः पराशक्तिः।

१५—अधिपिण्डं कुण्डलिनी।

१६—सप्तमः परमात्मा।

१७—अधिपिण्डं जीवात्मा।

१८—क्रमात्सप्त स्वे तेषु सप्त व्याहृतयो भवन्ति।

१९—प्रथमो लोक एव पृथिवी।

२०—वायुमण्डलमन्तरिक्षम्।

२१—आदित्यः पराशक्तिः परमात्मा चेति त्रेधा द्यौः।

२२—चन्द्रमा गोलदृष्ट्याऽन्तरिक्षम्।

२३—तेजोदृष्ट्या द्यौः।

२४—आकाशः सूक्ष्म रजोदृष्ट्यान्तरिक्षम्।

२५—शुद्धत्वदृष्ट्या द्यौः।

२६—तदेतत्पंचविंशत्या सूत्राणां लोकोपव्याख्यानं भवति।



## अथ चतुर्थं प्रकृत्युपव्याख्यानम्

१—सर्वदृश्यचित्रभित्तिर्द्यौः ।

२—अदितिर्वा एषायद्यौः ।

३—सा प्रकृतिस्तेजोऽबन्नानाम् ।

४—तथाह्युपदिशति जैवलिः प्रवाहणो भगवान् ।

५—सतः प्रकृतित्वोपदेशविरोध इति चेन्नाव्यतिरेकाच्छक्तिशक्तिमतोः ।

६—तत्संभवश्रुतेर्गौणत्वं व्याचष्टे बादरायण आचार्यः ।

७—परिहरत्येव प्रतिज्ञायाहानिं नोत्पत्तिसाधनायोपदिशति तद्हानिं यत्प्रथमान्तां करोति ।

८—अव्यतिरेकश्च तत्र हेतुरुपन्यस्तो न साध्यो यत्पञ्चम्यन्तं करोति ।

९—हेतुनाऽप्यनन्यथासिद्धेरुत्पत्तिप्रसिद्धिरिति चेन्नाभेदार्थत्वात् ।

१०—छन्दोगानामेव सर्गप्रक्रमस्य प्रकृतत्वादुपक्रममध्योपसंहारलिङ्गैः ।

११—अमृतशब्दस्यापरिहृतत्वात् ।

१२—यावद्विकारं तु विभाग इति प्रत्युदाहरणम् ।

१३—अविभाज्यत्वमोतप्रोतश्रुतेरच्छेद्यत्वाच्च ।

१४—मातरिश्वनो नित्यत्वापत्तिरिति चेत्तदिष्टम् ।

१५—स प्रणवान्नातिरिच्यते ।

१६—सहि प्रणवो भवति प्रकृतेः शब्दाख्यो नित्यकर्मात्मा ।

१७—तन्नित्यत्वादेव वेदनित्यत्वम् ।

१८—शिष्टभाष्यातिक्रम इति चेद्वरं शिष्टतरसूत्रातिक्रमात् ।

१९—मरुतो मातरिश्वनस्तरङ्गाः प्रज्ञानस्येव विज्ञानानि ।

२०—अतो न तेषां जन्मप्रलयाभ्यां मातरिश्वनो विकारत्वं विज्ञानानामिव प्रज्ञानस्य ।

२१—मरुद्भिर्नादाश्च व्याख्याताः ।

२२—अत्र प्रज्ञानविज्ञानं पदे स्ववृत्तिपरे ।

२३—सेयमदितिः सर्वप्रकृतित्वात् भूतभव्यात्मिका ।

२४—तदेतत्पश्यन्नदितिर्जातमदितिर्जनित्वमिति राहूगणो गोतमो भगवानृषिराह ।

२५—तदेतच्चतुर्विंशत्या सूत्राणां प्रकृत्युपव्याख्यानं भवति ।



## अथ पंचमं त्रिपुट्युपव्याख्यानम्

१—अनुभूतिरति तथा ।

२—भोक्तृभोग्यभोगरूपा ।

३—अविभाज्यास्त्रयोंशा एते ।

४—तस्मादनुभूतेरेक रूपतात्रिरूपता च ।

५—आदिर्भोक्ता परमात्मा ।

६—आदिभोग्यमाकाशम् ।

७—आदिर्भोगस्तपः ।

८—सर्गात्प्राक् सर्वभूतबीजमाकाशं परमात्मनि लीनम् ।

९—न तदाभोग्यः प्रस्फुटस्तपसः प्रशान्तेः ।

१०—भोगस्यास्फुटत्वान्न प्रत्ययगोचरोऽन्यस्तदानीम् ।

११—तस्मादविभागस्तदा भोक्तृभोग्ययोः ।

१२—अतो भोग एव भोक्तृभोग्ययोर्विभागायेत्युक्तं भवति ।

१३—भोक्ता सत्य उच्यते ।

१४—भोग्यमृतं प्राप्तत्वात् ।

१५—आदौ तयोर्विभक्ततयाऽभिव्यक्तिं पश्यन्नृतं च सत्यं चाभीद्धात्तपसोऽध्यजायतेति भगवान्माधुच्छन्दसोऽघमर्षण ऋषिराह ।

१६—तदेतत्पञ्चदशभिः सूत्रैस्त्रिपुट्युपव्याख्यानं भवति ।



## अथ षष्ठं विद्योपव्याख्यानम्

१—सर्वत्र ब्रह्मदृष्टिः शाण्डिल्यविद्या ।

२—सर्वं दृष्टं संगृहीनस्तज्जलानि तिथि या शान्तो ध्यायेत् ।

३—न किंचन ध्यायेत्संप्रसादेन तिष्ठेदेषा भूमविद्या ।

४—बहिराकाशं दर्शं दर्शमनन्यमनास्तिष्ठेदेषाऽऽकाशोद्गीथविद्या ।

५—हृदयाकाशं ध्यायंस्तिष्ठेदेषा दहरविद्या ।

६—द्रष्टृदृश्यदर्शनेषु दर्शनं दृश्यपरंचेत्संसारः ।

७—स्वपरं द्रष्टृपरं वाचेदक्षिपुरुषविद्या ।

८—प्राणगत्यन्ववेक्षणं संवर्गविद्या ।

९—प्राणस्वरानुसंधानमक्षरोद्गीथविद्या ।

१०—मनसैव मन्त्राक्षरानुसंधानं मन्त्रोद्गीथविद्या ।

११—अन्तरूष्मानुसंधानं ज्योतिर्विद्या ।

१२—अहंस्फूर्तौनिष्ठा वैश्वानरविद्या ।

१३—तदेतद्द्वादशभिः सूत्रैः प्राधान्येन विद्यानामुपव्याख्यानं भवति ।



## सप्तमं शक्तितरङ्गोपव्याख्यानम्

१—ईश्वरशक्तेर्मध्यमे लोके त्रयस्तरङ्गाः ।

२—प्रणवविद्युद्वायवः ।

३—तेषां भूयो नादस्पष्टतेजःस्पष्टपवनरूपेणाभिव्यक्तिर्निमित्तैः ।

४—तदेतत्त्रिभिः सूत्रैः शक्तितरङ्गोपव्याख्यानं भवति ।



## अथाष्टमं जीवोपव्याख्यानम्

१—श्रेष्ठः प्राण एव अन्ये प्राणाः स्वरूपतः ।

२—स्थानभेदाद्भेदेन व्यवहारः ।

३—सकर्मभिः क्षणे क्षणे गुणतो विपरिणम्यते ।

४—न स्वरूपतः ।

५—तस्यैवोत्क्रान्तिर्गतिश्च ।

६—सादिः ।

७—जीवात्मन उपाधिः ।

८—तस्य सादित्वाज्जीवस्यापि सादित्वमौपाधिकम् ।

९—एतेन कर्मणामुपाधीनां च विमतमनादित्वं व्याख्यातम् ।

१०—तस्यात्मलाभो जनकस्य प्राणात् ।

११—दीपादिव दीपस्य ।

१२—आगतिश्चेत्सत्या तत्र भूयः स्यादावेशस्तदोभयोः सायुज्यं स्यात् ।

१३—श्रुतेः सत्यैवेति चेदश्रुतिरपि ।

१४—गतस्य यावत्संपद्गतिरेवेत्येकं मतम् ।

१५—आर्याणां श्राद्धकाण्डं प्रायस्तन्मतानुसारात् ।

१६—पुण्यपापज्ञानाज्ञानतपआलस्यनिरर्थतेति चेच्छीघ्रविलम्बाभ्यां सार्थकता ।

१७—अन्यस्याप्येवम् ।

१८—नित्यबन्धवादिनो नास्तिकोभ्योऽपि खलाः ।

१९—गतस्यागतिः कर्मफलक्षये भूय इत्यपरं मतम् ।

२०—श्रेष्ठस्य प्रकृतिः प्रथममते सर्वथा पितृप्राणानुसारिणी ।

२१—द्वितीयमते प्राधान्येन स्वपूर्वप्रकृत्यनुसारिणी ।

२२—उभयत्रापि परिणामस्त्वधुनातनकर्मायत्तः ।

२३—फलेषु दृष्टहेतुकत्वान्नादृष्टकल्पनम् ।

२४—सति संभवे स्वप्रकृते हेतुत्वं न निवार्यते ।

२५—विषयभेदेनोभयोर्मतयोः संभवोऽस्तीति गणपतिर्वासिष्ठः ।

२६—तदेतत्पञ्चविंशत्या सूत्राणां जीवोपव्याख्यानं भवति ।

इति श्रीभगवन्महर्षिरमणान्तेऽवासिनो वासिष्ठस्य नरसिंहसूनोर्गणपतेः कृतिरुपव्याख्यानाष्टकं समाप्तम् ।



# विवाहधर्मसूत्रम्

## अथ प्रथमः खण्डः

१—कन्याया अलंकृत्याहूय प्रदानं ब्राह्मे विवाहे पूर्वम् ।

२—तदेव सहोभौ चरतां धर्ममिति समयपूर्वकं प्राजापत्ये ।

३—अध्वर्य्यवेदक्षिणात्वेन न दैवे ।

४—गोमिथुनं गामेकां वा वरात्प्रति गृह्यार्षे ।

५—गुरुजनयत्नान्मिलिते समवाये कन्ययावरस्य प्रीत्यावरणं स्वयं वरगान्धर्वे सामान्यतो दृष्टस्य वा ।

६—सह राज्ञा कन्यापक्षं निर्जित्य हरणं राक्षसे ।

७—इच्छन्त्यास्तु राक्षस गान्धर्व इति वासिष्ठः ।

८—कन्यापित्रे नियतशुल्कप्रदानं मानुषे तमप्यासुरमेके ।

९—कांक्षितशुल्कप्रदानमासुरे ।

१०—यः कश्चिद्विजयो वीर्यशुल्के ।

११—कन्यापित्रा निर्धारित एव विषये ।

१२—कन्यायै तत्पितृकांक्षितालंकारदानमलंकारशुल्के ।

१३—एतेष्वेकादस्वनन्तरः संस्कारस्तुल्यः सर्वेषु ।

१४—प्रीतिमतोर्मिथो योगो मिथो योग गान्धर्वः ।

१५—तत्र संबन्धमात्रस्य विवाहप्रयोजकत्वम् ।

१६—सुप्तायाः प्रमत्ताया वा चौर्येण हरणं पैशाचमाहुः ।

१७—तमविवाहमेव वासिष्ठो मन्यते ।

१८—तस्मात्कन्यामपहर्तुराच्छिद्य पुनरन्यस्यै प्रतिपादयेत् ।

१९—न चेद्गर्भिणीत्येके ।

२०—न चेद्दूषितेत्यपरे ।

२१—तदुभयमपि यदि कन्यानुमते तदैव प्रतिबन्धायेति वासिष्ठः ।

२२—नानुमन्यते चेद् गर्भे शिशुमपहृत्रे दत्वातामन्यस्मै प्रतिपादयेत् ।

२३—दूषिता चेत्प्रायश्चित्तं शरीरशुद्धये कृत्वा ।

## अथ द्वितीयः खण्डः

१—दैवो ब्राह्मणानामेव तेषामेवार्त्विज्यसंभवात् ।

२—आर्षश्च गवादिप्रतिग्रहीतृत्वाधिकारस्तेषामेव हि ।

३—स गोमूल्यत्वाद्विक्रय एवेति चेन्न तत्र दानस्मरणात् ।

४—राक्षसो राक्षसगान्धर्वश्चवीर्यवतां राज्ञामेवोपपद्यते ।

५—क्षत्रियाणामेव धर्म्यौ प्राक्ष्चः तौ ।

६—मिथोयोग गान्धर्वश्च ।

७—आसुर आर्याणां गर्हितः ।

८—ब्राह्मप्राजापत्यस्वयंवरगान्धर्वाः सर्वेषां पूजिताः ।

९—न ब्राह्मणानां तृतीय इत्येके ।

१०—तत्र निषेधवचनं सामान्यतो दृश्यमानं मिथो योगपरं प्रशंसावचनं स्वयंवरपरं वचनयोरेवं सामरस्यं स्यादिति वासिष्ठः ।

११—मानुषालंकारशुल्कौ सर्वेषामनिन्द्यौ ।

१२—वीर्यशुल्कः स्वयंवरगाधर्ववत् ।

१३—स्त्रीणां नियतकालविक्रयः पण्यत्वेन स्थितिर्वा न विवाहः ।

## अथ तृतीयः खण्डः

१—स्त्रीणां न प्रागृतोर्विवाहो रागानुदयादित्येके ।

२—प्रतिज्ञाया असमयात् ।

३—अन्यकृता तु बध्नाति ।

४—वैवाहिकमन्त्रलिङ्गेभ्यः ।

५—त्रिरात्रादूर्ध्वं समावेशनाभ्यनुज्ञानलिङ्गात् ।

६—अदृष्टर्तुकयापि समावेशः संस्कारार्थ इति चेन्नाश्वलायनेन निषिद्धत्वात् ।

७—जैमिनिधर्मस्मृतौ नग्निकायाः पर्युदासात् ।

८—ऋतुदर्शने पित्रादेः पातित्यस्मरणान्नेति चेन्न स्मृत्यन्तराद्बलवतो रजोदर्शनादपि पश्चात्त्रीणि वर्षाणि पितुर्दानाधिकारव्यक्तेः ।

९—वर्षत्रयादूर्ध्वं वा कन्यायाः स्वयंवरणाधिकार एव स्मर्यते न कस्यचित्पातः ।

१०—पितुर्लोभस्यावकाशात् ।

११—विद्याप्रतिबन्धकत्वात् ।

१२—सन्तदौर्बल्यहेतुत्वात् ।

१३—पूर्वेषामनाचारात् ।

१४—माभूवन्ननाथाः प्रायेणेति ।

१५—नित्यकन्यात्वोच्छेदप्रसक्तेः ।

१६—न चेष्टापत्तिर्मान्त्रवर्णिकाल्लिङ्गादाचाराच्च ।

१७—पश्चाद्दतोरूढानामन्यत्र सुखस्यैव दर्शनात् ।

१८—वोढुः कतिचिद्वर्षाण्यनाश्रमत्वप्रसङ्गात् ।



## अथ चतुर्थः खण्डः

१—प्रागेवर्तो रित्यन्ये नियमनिबन्धनो हि विवाहो न रागनिबन्धनः ।

२—अनुरागस्य प्रथमाश्रमविरुद्धत्वान्नह्युत्तरोनुरागादिः ।

३—परस्परानुरागो नाधर्मायेति चेन्न युगपत्तदुदयस्य मातु-मशक्यत्वात् ।

४—कन्याया अनुरागो विवाहस्य प्रतिष्ठानैवमुभयथा विरोध इति चेत्कन्यागुणान्वेषणानर्थक्यम् ।

५—दानस्याङ्गमेव प्रतिज्ञा ।

६—दत्तैव सहोपासीत न प्रत्यज्ञानामिति ।

७—अङ्गाङ्गिकालविप्रतिषेधेऽङ्गिनो बलीयस्त्वात् ।

८—तस्य चानुमितिर्गौतमधर्मस्मृतेः ।

९—विमतनिन्दास्मृतिभ्यश्च ।

१०—विमते रागस्वाम्ययोः कलाहाद्दानस्य पाप्मविद्धत्वमुच्छेदो वा ।

११—वैवाहिकमन्त्रलिङ्गानां प्रत्यक्षस्मार्तविधिनिषेधाभ्यां बाधितत्वात् ।

१२—श्रौताल्लिङ्गान्नास्मार्तादेशो बलीयानिति चेत् ।

१३—नैवमादित्यस्य वारुणीभिरुपस्थानात् ।

१४—वरुणस्याप्यादित्यत्वादविरोधोत एव वारुणीभी रात्रेरुपस्थानमुपदिशन्बौधायनः संगच्छत इति चेत् ।

१५—अन्यदैवत्याभिरङ्गारकाद्युपस्थानं तर्हि भवत्युदाहरणम् ।

१६—समावेशनविधेर्ब्राह्मणेष्वनाचारादन्यविषयत्वम् ।

१७—सर्वत्रापठितत्वाच्च ।

१८—अनियतत्वादपि ।

१९—ब्राह्मणेष्वपि यत्राचर्यते स निषेको न गर्भाधानम् ।

२०—उभयं विनापि मन्त्रपठनाचारः संस्कारार्थः ।

२१—गर्भाधानादन्यत्र मन्त्रपठनमनर्थकमिति चेन्न भाविदृष्टेः ।

२२—संस्कारार्थादन्यत्राश्वलायनस्य निषेध उत्सर्गात् ।

२३—अनग्निकामिति निषेधो वासोग्रहणात्प्रागेव ।

२४—नग्निका तु श्रेष्ठेति गोभिलस्मृतेरतिबालाविवाहप्रसक्तिरिति चेत्तत्र नग्निकापदमनागतार्तवा परम् ।

२५—वर्षत्रयोदीक्षणमापद्धर्मः ।

२६—अनापदि प्रागृतोरप्रदाने पात एव पित्रादीनां स्मृत्यन्तरेभ्यः ।

२७—लोभी पितासङ्के न नियम्यः ।

२८—न विद्याप्रतिबन्धको विवाहो निषेधादर्शनात् ।

२९—हि तान्वेषणे तु पितृकुलाच्छ्वशुरकुलं न दवीयः ।

३०—सङ्घदौर्बल्यं स्त्रीणां गर्भाधानयोग्यस्य वयसोऽनन्वेक्षणात् ।

३१—आधातृणामप्रौढत्वाच्च ।

३२—अस्ति पूर्वेषामाचारो यथा शृणुम उषस्तेः कथायाम् ।

३३—नित्यकन्याचारौलैङ्गिकस्तन्निन्दायामेव ।

३४—ऐतिहासिकश्चान्यत्र ।

३५—संघान्तरे सुखं शपथमात्रमुताहो अनिर्धारितहेतुकम् ।

३६—आश्रमो न भोगायत्तः ।

३७—कर्माणि तु जायायाः प्रौढिं नापेक्षन्ते ।

३८—क्षत्रियादीनां तु पश्चादृतोरपि गान्धर्वादेरभ्यनुज्ञा ।

## अथ पञ्चमः खण्डः

१—ब्राह्मणानामपीति वासिष्ठः ।

२—तेषामपि गन्धर्वस्य विहितत्वात् ।

३—मानुषाख्यस्य चागर्ह्यत्वात् ।

४—कांक्षितशुल्कं विनेतरस्य चासुरस्य ।

५—ब्राह्मादिचतुष्के यद्दानं तदृतोरनन्तरं त्रीणि वर्षाणि सप्रायश्चित्तम् ।

६—प्रायश्चित्ताभाव एव पित्रादीनां पातः ।

७—प्रायश्चित्तापनोद्यमेव वृषलीत्वमपि दृष्टरजसः संस्कारात्प्रागार्येषु ।

८—गान्धर्वेपि वृषलीत्वप्रायश्चित्तं कार्यमेव त्रैवर्णिकेषु ।

९—नित्यं सप्रायश्चित्तत्वादधर्म्य एव गान्धर्वः प्रसज्येतेति चेन्न शरीरमात्रसंबन्धित्वाद्दोषस्य विहितकालानुषक्तस्य ।

१०—ऋतोः पश्चाद्वर्षत्रयादूर्ध्वं न वृषलीत्वस्य प्रायश्चित्तमितिचेन्न मनुविरोधापत्तेः ।

११—वृषल्याः सदृशः पतिर्हि दुर्लभः ।

## अथ षष्ठः खण्डः

१—एकादशमारभ्य रजस्वला गण्यते पराशरधर्मस्मृतेरित्येके ।

२—मैवं द्वादशे दानविधेः प्रबलात् ।

३—एकादशाब्दमात्रे पारिभाषिकरजस्वलापदम् ।

४—स्त्रीणां विवाहस्योपनयनस्थानीयत्वाद्ब्राह्मणकन्यानामाषोडशं संस्कारकालो मुख्य इत्येके ।

५—एतेन क्षत्रियवैश्यकन्ययोश्च संस्कारकालो व्याख्यातः ।

६—ऋतुपदस्य संस्कारकालात्ययोपलक्षकत्वम् ।

७—दन्तजननकालादिष्वप्येवमेव नियतसमयस्वीकारात् ।

८—तत्तत्कालानन्तरमेव वर्षत्रयोदीक्षणम् ।

९—ऋतुमतीपदमजहल्लक्षणया षोडशादिवर्षामनृतुमतीमपि बोधयति न तु तत्पूर्वदृष्टरजसं जहातीति वासिष्ठः ।

१०—दृष्टान्तोपपत्तिश्चैवम् ।

## अथ सप्तमः खण्डः

१—प्रागृतोः कन्योपनीता चेद्विवाहकालस्तस्याः पुंसामिव यथाभीष्टः ।

२—संस्कारपरत्वात्कालनियमस्य ।

३—स्त्रीणामुपनयनेऽध्ययनप्रसक्तिरिति चेदिष्टापत्तिः ।

४—तस्यापि विवाहस्योपनयनस्थानीयत्वात्तत्प्रसक्तिर्दुर्निवारा ।

## अथाष्टमः खण्डः

१—अन्यदूषिताया अप्युद्वाहः सहोढकानीनयोः पुत्रत्वेन स्मरणात् ।

२—नैवं येन दूषिता तेनैव सा वोढव्या ।

३—तर्हि सहोढकानीनयोरौरसात्पृथगुपदेशानुपपत्तिरिति चेन्न तयोरसंस्कृता जातत्वात्पृथगुपदेशोपपत्तेः ।

४—अन्यश्चेद्वोढा सा पुनर्भूवत् ।

५—पूर्वस्माज्जातमपत्यं पूर्वस्यैव तदा ।

६—वसिष्ठस्यर्षेर्मन्त्रदृष्टेः ।

७—अन्यथा व्यासस्य शान्तनवत्वापत्तिः ।

८—तव मते विचित्रवीर्यस्य पौनर्भवत्वापत्तिरिति चेत् तदिष्टम् ।

९—क्षेत्रिपराणि वचनानि क्षेत्रजविषयाणीति व्यवस्था ।



## अथ नवमः खण्डः

१—दत्तायाः पुनर्न दानम् ।

२—विपन्नपतिकाया अक्षतायास्तु न निषिद्धमिति पूर्वे ।

३—क्षताचेद्भूयो भर्तृकामिनी पूर्वस्य भर्तुर्भ्रातृस्थानीयं ज्ञातिमेव गान्धर्वेण विधिना वृणुयात् ।

४—मान्त्रवर्णिकलिङ्गप्रामाण्यात् ।

५—पौनर्भवस्मृतिलिङ्गाच्च ।

६—ब्रह्मादिचतुष्कविधिना पूर्वं परिणीताया एवैष नियमः ।

७—विध्यन्तरपरिणीता तु भर्तरि विपन्ने भूयो भर्तृकामिनी भर्तुरज्ञातिमप्यन्यं परिणयार्हं वृणुयात् ।

८—उभयत्रापि भूयो विवाहमनिच्छन्ती या तपसाकालं नयेत्सा पूज्यतमा ।



## अथ दशमः खण्डः

१—पुनर्विवाहे स्त्रीणां न संस्कारः पुनरित्येके ।

२—अस्तीति वासिष्ठः पुनर्भूशब्दार्थलिङ्गात् ।



## अथ एकादशः खण्डः

१—संस्कारो द्विविधो विवाहप्रयोजको गृहस्थाश्रमकर्मारभ्यकश्चेति तौ प्रधानप्रवेशहोमावाचक्षते ।

२—मिथो योगगान्धर्वेप्यस्त्येव द्वितीयः ।



## अथ द्वादशः खण्डः

१—संस्कर्तरि भर्तरि जीवत्येव या पुरुषमन्यं श्रयते तत्र पुनर्भूपदं भाक्तम् ।

२—स एवोपपातकिषु गण्यते पुमान् ।

३—पूर्वभर्त्रा सह पाठलिङ्गात् ।

४—जीवत्यपि नष्टे प्रव्रजिते क्लीबे पतिते च न दोष इत्येके ।



## अथ त्रयोदशः खण्डः

१—सर्वः सवर्णामुद्वहेदित्युत्तमः पक्षः सर्वमतेन ।

२—असवर्णाविवाहेष्वनुलोमप्रकारः पूर्वेषामगर्हितः ।

३—प्रतिलोमप्रकारो गर्हितः ।

४—अनुलोमश्चैकजातिजा चेत्कन्यागर्हित एव केषांचित् ।

५—अगर्हितः सर्वसंस्कारपक्षे ।

६—प्रतिलोमश्चेद्गर्हितोऽनुलोमोऽपि तथा वासिष्ठस्य ।

७—उभयत्रापि वर्णसंस्कारस्य तुल्यत्वात् ।

८—न्यूनाधिकत्वभावविषयदर्शनाच्च ।

९—तस्मात्सवर्णामेवोद्वहेत् ।

१०—इत्येकषष्ट्युत्तरेण शतेन सूत्राणां विवाहधर्मः सूत्रितो भवति ।

इति श्रीभगवन्महर्षिरमणान्तेवासिनो वासिष्ठस्य नरसिंहसूनोर्गणपतेः कृतिर्विवाहधर्मसूत्रं समाप्तम् ।

# अक्षरावली

श्रीकण्ठानन्तसूक्ष्माख्यं त्रिमूर्तिममरेश्वरम् ।
अर्घीशं भारभूतिं चातिथीशं स्थाणुकं हरम् ॥ १ ॥

झिण्टीशं भौतिकं सद्यो जातं चानुग्रहेश्वरम् ।
अक्रूरं च महासेनं स्वररुद्रान्नमाम्यहम् ॥ २ ॥

अन्यान्क्रोधीश चण्डेश पञ्चान्तक शिवोत्तमान् ।
एकरुद्रं च कूर्मेशमेकनेत्रं चतुर्मुखम् ॥ ३ ॥

अजेशं सर्वसौमेशौ लाङ्गलीशं च दारुकम् ।
अर्धनारीश्वरं चोमाकान्तमाषाढिदण्डिनौ ॥ ४ ॥

अत्रिमीनेशमेषेशौ लोहितं शिखिनं तथा ।
छगलाण्डं द्विरण्डेशं महाकालं च वालिनम् ॥ ५ ॥

भुजङ्गेशपिनाकीश खड्गीशाम्बकमर्जुनम् ।
भृगुं च नकुलीशानं शिवं संवर्तकं नुमः ॥ ६ ॥

केशवाद्यनिरुद्धान्ताः कीर्तिताः स्वरविष्णवः ।
चक्री गदायुधः शार्ङ्गी खड्गी शङ्खी हलायुधः ॥ ७ ॥

मुसली शूलहस्तश्च पाशवानङ्कुशी तथा ।
मुकुन्दो नन्दजो नन्दो नरो नरकजिद्धरिः ॥ ८ ॥

कृष्णः सत्यः सात्वतश्च शौरिः शूरो जनार्दनः ।
भूधरो विश्वमूर्तिश्च वैकुण्ठः पुरुषोत्तमः ॥ ९ ॥

बली बलानुजो बालो वृषघ्नवृषहंसकाः ।
वराहो विमलः पश्चान्नृसिंहो विष्णवो हलाम् ॥ १० ॥

निवृत्तिश्च प्रतिष्ठा च विद्याशान्तिरथेन्धिका ।
दीपिकादेविका पश्चान्मोचिकानन्तरं परा ॥ ११ ॥

सूक्ष्मा सूक्ष्मामृता ज्ञानामृताचाप्यायनी ततः ।
व्यापिनी व्योमरूपा चानन्ताः स्युः स्वरशक्तयः ॥ १२ ॥
सृष्टिश्चर्धिः स्मृतिर्मेधा संज्ञाकाञ्चनदेवता ।
द्युतिः स्थितिः स्थिरासिद्धिर्जरातदनुपालिनी ॥ १३ ॥
क्षान्तिर्महेश्वरी पश्चाद्रतिस्तदनुकामिका ।
विशालाक्षीह्लादिनी च प्रीतिस्तदनुनादिनी ॥ १४ ॥
तीक्ष्णारौद्रयभयानिद्रा तन्द्राक्षुत्क्रोधिनी क्रिया ।
उत्कारीमृत्युसंज्ञा च पीतातदनुसङ्गतिः ॥ १५ ॥
अरुणाश्यामलावज्रा स्मृताव्यञ्जनशक्तयः ।
वर्णानामेवमीशान विष्णुशक्तिस्वरूपता ॥ १६ ॥
अत्र वर्णाः स्वरस्पर्शान्तस्थोष्माणस्ततः परम् ।
ककारश्च क्षकारश्चेत्येकपञ्चाशदीरिताः ॥ १७ ॥
भूतान्यजगवीबालो बलो वाली वराहकः ।
सप्तवालिनमारभ्य धातवः सम्प्रकीर्तिताः ॥ १८ ॥
चन्द्रसूर्यौ समाख्याता - वनुस्वारमकारकौ ।
गकारश्चटकारश्च गजानन - षडाननौ ॥ १९ ॥
स्मृताः कलञ्च वा वर्णा ब्रह्मेन्द्र - यम-पाशिनः ।
कालः सकारः संप्रोक्तो हकारः प्राण उच्यते ॥ २० ॥
पकार उच्यते योनिरीकारः कमलोच्यते ।
ककारस्तु पुनः काम इति तन्त्रविदो विदुः ॥ २१ ॥

इति श्रीभगवन्महर्षिरमणान्तेवासिनो वासिष्ठस्य नरसिंहसूनोर्गणपतेः
कृतिरक्षरावली समाप्ता ।



# तत्त्वघण्टाशतकम्

यं विदुर्धवलं केशं हरेरतुलतेजसः ।
यः प्रलम्बासुरं हत्वा चक्रे लोकस्य मङ्गलम् ॥ १ ॥

बलेन विस्मितायस्य पृथिवी सचराचरा ।
कृष्णस्यापि च पूज्यो यो बभूवाग्रजतां गतः ॥ २ ॥

संकर्षणस्यांशमनन्तशक्तिमनन्तनामानममुं नमामि ।
रामं तृतीयं रमणीयगात्रं रमानिवासाननपुण्डरीकम् ॥ ३ ॥

अथ तत्त्वं प्रवक्ष्यामो यस्य ज्ञानाद्विमुच्यते ।
इह मन्दमतिर्मर्त्यैस्तितीर्षुर्भवसागरम् ॥ ४ ॥

करपादादिसंयुक्तो योयं देहः प्रदृश्यते ।
किंसोहमथवा प्राणः किंचेतः किमुतेतरत् ॥ ५ ॥

अहं कुतः समायातो गमिष्यामि च कुत्र वा ।
स्वतन्त्रः परतन्त्रो वा दासो वांशः स एव वा ॥ ६ ॥

विभूतयः कतीशस्य याभिर्व्याप्तमिदं जगत् ।
कृता इत्यादयः प्रश्ना जिज्ञासुभिरनेकशः ॥ ७ ॥

उत्तराणि तु दत्तानि तैस्तैः प्राज्ञैः पृथक्पृथक् ।
तेन संकीर्णमतयो भवन्त्यपि मनीषिणः ॥ ८ ॥

एवं तत्त्वे विप्रकीर्णैस्तैस्तैराचार्यभाषितैः ।
वदाम एकं निर्धार्य यच्छ्रेयो यच्छ्रुतं परम् ॥ ९ ॥

प्रकाशमाना भूतेषु सर्वावस्थासु सर्वदा ।
सर्वोत्तमा विजयते चिदेका सर्वमङ्गला ॥ १० ॥

यश्च भास्करबिम्बस्थः परमात्मा समीरितः ।
हृदयेऽस्मदादेश्च [illegible] श्रुतः ॥ ११ ॥

परमस्य च जीवस्य भेदश्चेत्खभुवोरिव ।
आत्मत्वमुभयोः सिध्येत्सन्ततैकान्वितं कथम् ॥ १२ ॥

प्रज्ञानत्वं श्रुतं लक्ष्म ब्रह्मणः परमात्मनः ।
जीवेपि दृश्यते ह्येतदस्मिंश्चैतन्यरूपिणि ॥ १३ ॥

यदि सिद्धान्ततो भेदो जीवात्मपरमात्मनोः ।
तत्त्वमस्यादिवाक्यानामर्थश्चाप्यनृजुर्भवेत् ॥ १४ ॥

ईश्वरं - ज - गुरात्मानमृषयो मन्त्रदर्शिनः ।
वामदेवाम्भृणीगाथि - पुत्र - प्रभृतयोऽनघाः ॥ १५ ॥

यावद्देहे स्वविभ्रान्तिस्तावद्भिन्नोहमीशतः ।
यदात्मानं विजानामि तदासोहं न संशयः ॥ १६ ॥

अन्तर्यामिनमीशानं वदन्त्यन्येऽपि तद्विदः ।
तन्मते हृदयस्यैव जीवत्वं परिकल्पितम् ॥ १७ ॥

अन्तर्यामी स्वयं जीवः शङ्करेणाभिभाषितः ।
एवं तत्त्वे सुविज्ञाते कलहः को नु विद्यते ॥ १८ ॥

तस्मात्कश्चिन्नावमान्यो यस्येशो हृदि राजते ।
आत्मनः परमं स्थानं हृदयं गीयते बुधैः ॥ १९ ॥

हृदयं यन्त्रसंकाशमात्मा विद्युत्समो मतः ।
आत्मनो हृदये चेष्टा यन्त्रे चेष्टा च विद्युतः ॥ २० ॥

अस्माकं हृदयं प्रोक्तं जीवस्यायतनं महत् ।
सूर्यस्य मण्डलं प्रोक्तमीशस्यायतनं महत् ॥ २१ ॥

तिस्रस्तु देवताः श्रेष्ठाः सर्ववेदप्रभाषिताः ।
तत्राग्निं प्रथमं वित्त यो भूलोकपतिः स्मृतः ॥ २२ ॥

इन्द्रं द्वितीयं जानीत भुवर्लोकपतिस्तु यः ।
वायोश्चेन्द्रस्य तुल्यत्वाद्वायुर्वात्र द्वितीयकः ॥ २३ ॥

तृतीयः सविता प्रोक्तः स्वर्लोकस्याधिनायकः ।
उताहो इन्द्र एवैको देवस्त्रिजगतः पतिः ॥ २४ ॥

तेजस्तु दिवि तस्यैव भजते सूर्यरूपताम् ।
पृथिव्यामग्निरूपत्वं हृदये चात्मरूपताम् ॥ २५ ॥

तेजोबहिर्गतं प्राहुरग्नीन्द्ररविरूपकम् ।
तदेवान्तः समाविष्टमात्मेति परिगीयते ॥ २६ ॥

आदित्यानां द्वादशानां ज्ञेया दैवतरूपता ।
एकादशानां रुद्राणां विज्ञेया प्राणरूपता ॥ २७ ॥

वसूनां गीतमष्टानां लोकात्मत्वं मनीषिभिः ।
एते त्रयो देवगणाः सकलागमसम्मताः ॥ २८ ॥

वसवस्त्वधिलोकं स्युरादित्यास्त्वधिदैवतम् ।
अध्यात्मं कीर्तिता रुद्रास्तत्त्वविद्भिर्विचक्षणैः ॥ २९ ॥

आदित्यानामहं विष्णुरिति कृष्णः स्मृतिः स्वयम् ।
तस्मादादित्य एवायं योऽसौ विष्णुः प्रगीयते ॥ ३० ॥

पाणीन्द्रियं यदीशस्य लोकशिल्पविचक्षणम् ।
त्वष्टारं दैवतं तस्य मुनयः संप्रचक्षते ॥ ३१ ॥

वेदस्य माता शब्दात्मा पावनेभ्यश्च पावनी ।
यावाक्समस्तनाथस्य तद्देवो ब्रह्मणस्पतिः ॥ ३२ ॥

स एव सविता नाम प्रोक्तः कैश्चन पण्डितैः ।
भिद्यते सवितुः सोयं सूर्यमण्डलवाचकात् ॥ ३३ ॥

येन सर्वं विसृजति त्रैलोक्यक्षेमहेतवे ।
तत्प्राहुरिन्द्रियं मित्रस्तद्दैवत - मुदीर्यते ॥ ३४ ॥

अन्तर्यामीति यः सर्वभूतानां हृदयस्थितः ।
जीवो वैश्वानरं नाम तस्यांशं दैवतं विदुः ॥ ३५ ॥

पादः सर्वाणि भूतानि यदस्य परमात्मनः ।
अंशः पादेन्द्रियाधीशस्तस्मात्संसारचालकः ॥ ३६ ॥

मण्डले त्वयमेवांशो विष्णुरित्यभिधीयते ।
हृदये त्वयमेवांशः प्रोक्तो वैश्वानरो बुधैः ॥ ३७ ॥

निषिद्धत्यत्र यद्देतः सर्वसर्गप्रवर्तकम् ।
तल्लिङ्गं परमेशस्य धाता तस्य तु दैवतम् ॥ ३८ ॥
येनाददाति सकलं रसादि जगतां प्रभुः ।
इन्द्रियं रसनाख्यं तत्तद्देवो वरुणो मतः ॥ ३९ ॥
येन जिघ्रति भूतेशः सर्वेषां कर्म वासनाः ।
तद्घ्राणमर्यमातस्य देवो नान्यस्ततो यमः ॥ ४० ॥
इन्द्रियंश्रवणं नाम यदीशस्य प्रकीर्तितम् ।
विवस्वदाख्यमादित्य - मामनन्त्यस्य दैवतम् ॥ ४१ ॥
दिग्देवताख्या तस्यैव - भवतीत्यनुशुश्रुम ।
सपुमान्वनिता सा वा भवेद्दिव्ये तु विग्रहे ॥ ४२ ॥
विद्युद्रूपं परं ज्योतिर्नयनं परमेशितुः ।
अथवा सकलं ज्योतिर्नयनं संप्रकीर्त्यते ॥ ४३ ॥
देवानामस्मदादीनां भूतानां च समन्ततः ।
यद्दृष्टिसाधनं ज्योतिः सहस्राक्षस्य दैवतम् ॥ ४४ ॥
इन्द्रियाणां वरं चक्षुर्देवानां वासवो वरः ।
यश्चक्षुर्वासवं वेद स वेद सकलं जगत् ॥ ४५ ॥
वृत्राख्या तमसो ज्ञेया शक्राख्या ज्योतिषस्तथा ।
तस्माद्वृत्रस्य हन्तारं शक्रमाचक्षते बुधाः ॥ ४६ ॥
अक्ष्णोरन्तः समाविष्टमादित्यं वासवात्मकम् ।
ध्यायन्ग्रन्थित्रयं भित्वा प्रयाति परमां गतिम् ॥ ४७ ॥
पूषा नाम य आदित्यः स त्वगिन्द्रियदैवतम् ।
शरीरमेष पुष्णाति सर्वेषां च शरीरिणाम् ॥ ४८ ॥
भूदेवताख्या तस्यैव भवतीत्यनु - शुश्रुम ।
सपुमान्वनितावासा भवेद्दिव्ये तु विग्रहे ॥ ४९ ॥
भगः कीर्तिर्भगोलक्ष्मीर्भगो माहात्म्यमुच्यते ।
भगः कामः समाख्यातो भगो रत्नं समीर्यते ॥ ५० ॥
भग एव स्मृतं वीर्यं यत्नश्चापि भगः स्मृतः ।

एवं विभूतिस्तु भगो मनसः खलु दैवतम् ॥ ५१ ॥
चन्द्रमाभिधानं तस्यैव भवतीत्यनुशुश्रुम ।
स पुमान्वनिता वासा भवेद्दिव्ये तु विग्रहे ॥ ५२ ॥
तद्वन्तं परमेशानं भगवन्तं प्रचक्षते ।
प्रत्यग्दृशां मुनीनां च भगवच्छब्द इष्यते ॥ ५३ ॥
लक्ष्मीः कामश्च वीर्यं च माहात्म्यं च पृथग्विधम् ।
सिद्धानां ज्ञानयुक्तानां प्रतितिष्ठन्ति चेतसि ॥ ५४ ॥
एवं द्वादश चादित्या व्याख्यातास्तत्त्वदर्शिना ।
प्रवरेण वसिष्ठानां नरसिंहस्य सूनुना ॥ ५५ ॥
एतेषां हेतुभूता ये प्राणा एकादश स्मृताः ।
भूतात्मकास्ताभूतेशविभूतीः प्राहुरुत्तमाः ॥ ५६ ॥
रुद्राणां प्राणरूपाणां सूर्याणां देवतात्मनाम् ।
एकत्त्वं यो विजानाति तत्त्ववेत्ता स उत्तमः ॥ ५७ ॥
वैश्वानरस्य स्थानं तु पृथिवी सम्प्रकीर्तिता ।
स प्रोक्तः प्रथमो देवो देवता तत्त्ववेदिभिः ॥ ५८ ॥
अस्माकं पदवन्नैव विभोः कर्मास्पदं पदम् ।
ज्ञानस्यैव पदाभिख्याधर्मभूतस्य गीयते ॥ ५९ ॥
ऐश्वरं हृदये ज्ञानं सर्वभूतेषु भासते ।
तमंशं पार्थिवं प्राहुस्तथा वैश्वानरं विदुः ॥ ६० ॥
बिम्बे यदैश्वरं ज्ञानं दिननाथस्य भासते ।
दिव्यं तमंशं भाषन्ते तथा विष्णुं मनीषिणः ॥ ६१ ॥
उपाधिवशतो गायन्त्युभौ च पुरुषाकृती ।
पूर्वस्य प्रतिबिम्बोन्यः पूर्वः स्यान्मध्यमस्य तु ॥ ६२ ॥
सर्वेषामपि भूतानामन्तरे भाति यद्यपि ।
वैश्वानरोऽयं प्रथमः पृथग्विग्रहवर्जितः ॥ ६३ ॥
तथापि भुवि संजातो यो मूलपुरुषो महान् ।
तत्रैव देवताख्यातिरभिमान - विशेषतः ॥ ६४ ॥

त्वचस्तु देवता देवी या भूर्नारी स्वरूपिणी ।
तस्याश्च पृथिवीं स्थानं विजानीत विचक्षणाः ॥ ६५ ॥
तुषारदीधितेर्बिम्बं यमस्य स्थानमुच्यते ।
पितॄणामपि सर्वेषां नायकः संप्रकीर्तितः ॥ ६६ ॥
विष्णोर्लक्ष्मी समेतस्य स्थानं स्यात्सूर्यमण्डलम् ।
वैकुण्ठमिति तस्यैव नाम गीतं परैर्बुधैः ॥ ६७ ॥
धाता साक्षात्परः प्रोक्तो भक्त्योक्तिस्तु विभूतिषु ।
समष्टेरिन्द्रियं बीजशालिवस्त्वेव तत्त्वतः ॥ ६८ ॥
अन्येषां दैवतानां तु स्थानं मध्यममुच्यते ।
एवं स्थानानि यो वेद देवानां स कृती नरः ॥ ६९ ॥
आदित्यानां पतिर्विष्णुर्वासवो मरुतां पतिः ।
पितॄणां यम ईशानः पतिर्वैश्वानरो विशाम् ॥ ७० ॥
आदित्येभ्यो द्वादशभ्यो भिद्यन्ते विष्णुसेवकाः ।
आदित्या उभयेभ्यश्च भिद्यते सूर्यमण्डलम् ॥ ७१ ॥
शिवस्त्वेकादशः प्राणस्तत्त्वदृष्ट्यां निगद्यते ।
एष दैवत दृष्ट्यांतु वासवान्नातिरिच्यते ॥ ७२ ॥
वस्तुतो देवतैकैका प्रतिस्थानं प्रकीर्तिता ।
तद्विभूतय एवान्यास्तत्तत्स्थानेषु कीर्तिताः ॥ ७३ ॥
पृथिव्यात्मावसुरियं शुक्रस्तु वसुरम्ययः ।
अग्नि रूपोवसुर्भौमो वायुरूपो वसुर्बुधः ॥ ७४ ॥
स्थिरो वसुर्वियद्रूपो वसुः सोमात्मकः शशी ।
द्युरूपस्तु वसुर्जीवस्सूर्यरूपो वसुस्त्वसौ ॥ ७५ ॥
केचिद्देवगणान्भौमान्वसूनाचक्षते विदः ।
मध्यमस्थान्देवगणान्रुद्रांस्तु परिचक्षते ॥ ७६ ॥
आदित्यानुत्तमस्थान - गतान्देवगणान्विदुः ।
स्थूलशक्ति महाभाग भूयस्त्वात्सोक्ति - चातुरी ॥ ७७ ॥

सर्वेषामप्यधिष्ठानं परं ब्रह्म प्रकीर्तितम् ।
आकाशवत्सर्वगतं तत्तेजः समुदाहृतम् ॥ ७८ ॥
अस्माकं हृदये यच्च देवानां हृदये च यत् ।
यश्च बिम्बे भगवतः सूर्यस्य दिविराजतः ॥ ७९ ॥
यस्मिंत्सर्वे वयं चापि यस्मिन्सर्वे दिवौकसः ।
यस्मिन्भानुश्चन्द्रमाश्च यस्मिन्निन्द्रश्च पावकः ॥ ८० ॥
यस्मिन्वायुर्मातरिश्वा यत्राकाशो महानयम् ।
यत्रापो यत्र पृथिवी यस्मिन्सर्वं प्रतिष्ठितम् ॥ ८१ ॥
तदेतन्निर्मलं ब्रह्मज्योतिः परममक्षरम् ।
तद्विज्ञाय कृती मर्त्यो भवेन्नान्येन हेतुना ॥ ८२ ॥
बुद्धिः पराची संसारं प्रवर्तयति देहिनाम् ।
बुद्धिरेव परं ज्ञानं या प्रतीची मनीषिणाम् ॥ ८३ ॥
अहंकारो द्विधा प्राज्ञैः शुद्धोऽशुद्ध इतीर्यते ।
देहादिविषयोऽशुद्धः शुद्धः स्वात्मैकगोचरः ॥ ८४ ॥
अशुद्धा धीः पराची स्याच्छुद्धा प्रत्यग्गतिर्भवेत् ।
प्रतीच्या अपरो योगः प्रवक्तुं केन शक्यते ॥ ८५ ॥
अशुद्धाहंकृतिर्माया ज्ञानं शुद्धा त्वाहंकृतिः ।
अन्विष्याहंकृतेर्मूलं विशुद्धाहंकृतिर्भवेत् ॥ ८६ ॥
देहात्मबुद्धिर्यावत्स्यादस्माकं देहधारिणाम् ।
तावद्दासवदस्माभिर्वर्तितव्यं परात्मनि ॥ ८७ ॥
यदा प्रतीची दृष्टिः स्यादस्माकं तत्त्वदर्शिनाम् ।
तदा दास्यान्महादुःखाद्विमुक्तिः संप्रजायते ॥ ८८ ॥
परतन्त्रे कुतः सौख्यं स्वातन्त्र्यं मुक्तिरुच्यते ।
देहाभिमानमाधूय स्वतन्त्रः सुखवान्भवेत् ॥ ८९ ॥
देहाभिमानी त्वाशाभिः सर्वतो दूषिताशयः ।
आदौ स्वमनसो दासः परेषां भविता ततः ॥ ९० ॥
मनो येन जितं तस्य दास्यदुःखं विनश्यति ।
अकामस्य कुतः किं वा भवितव्यं महात्मनः ॥ ९१ ॥

इदं विज्ञाय यः शास्त्रं यथोक्तमनुतिष्ठति ।
गतभेदः स लभते भगवच्चरणामृतम् ॥ ९२ ॥
ऋषिभिर्वा मदे वाद्यैर्यद्दृष्टं मन्त्रदर्शिभिः ।
तस्य शास्त्रस्य सारोयं मया संगृह्य कीर्तितः ॥ ९३ ॥
अस्माभिः सकलैर्मान्यो भगवान्बादरायणः ।
येनार्थवन्ति सूत्राणि चक्रिरे तत्त्वदर्शिना ॥ ९४ ॥
स चापि भगवान्मान्यः शङ्करो विदुषां वरः ।
येन भेदमतिर्धूता जीवात्मपरमात्मनोः ॥ ९५ ॥
मान्यः स यतिराजोपि प्रपत्तिर्येन दर्शिता ।
विचार्य सकलं शास्त्रं भक्तानुग्रहकाम्यया ॥ ९६ ॥
अंशावतारः पवनस्य मान्यो मध्वश्च माध्वीतुलितोक्तियुक्तः ।
यो भेदवादं कथयन्नरेषु सर्वोत्तमत्वं स्वभुवो बभाण ॥ ९७ ॥
स चापि वल्लभाचार्यो मान्यो बुद्धिमतांवरः ।
शुद्धाद्वैतमतं येन स्थापितं धरणीतले ॥ ९८ ॥
श्रीकण्ठः स च संमान्यः सर्वागमविशारदः ।
येन शैवमतं भूम्यां योगिश्लाघ्यं प्रवर्तितम् ॥ ९९ ॥
ब्रह्मदास्येन योगेन ज्ञानेन च मनीषिणः ।
अर्चयन्तश्चिन्तयन्तः प्राप्नुवन्तीति मे मतिः ॥ १०० ॥
वेदांतशास्त्रशतकांसकलान्विचार्य प्राचामृगागमदृशां मतमाददानः ।
चैत्रे फणीश्वरकलाजनितस्य पुंसो घण्टाशतं गणपतिः कविराडकार्षीत् ॥१०१॥

इति श्रीभगवन्महर्षिरमणान्तेऽवासिनो वासिष्ठस्य नरसिंहसूनोर्गणपतेः
कृतिस्तत्त्वघण्टाशतकं समाप्तम् ॥



# सप्तगीती

## प्रथममग्निगीतम्

वाचमधितिष्ठञ्ज्योतिरपि भौमम् । किंचिदपि दैवं गेयमविरामम् ॥ १ ॥
सक्रतुषु होता विप्रमुखवासी । अत्ति च स हव्यं वेदितलभासी ॥ २ ॥
पावकवसुस्त्वं ज्वालशतमाली । कश्चिदसिरुद्रः शास्त्रशतशाली ॥ ३ ॥
पावक यदास्ये भासि मनुजानाम् । ते तदिह राज्यं बिभ्रति पशूनाम् ॥ ४ ॥
अस्मितवदास्ये संचर मदास्ये । सत्सदसि मोहं यामि न यथाऽहम् ॥ ५ ॥
नास्ति शरणं मे कोप्यवनिपृष्ठे । अग्निमवनार्थी देवमुपतिष्ठे ॥ ६ ॥
अस्तिकरमाली कोपि दिवि राजा । एष ननु कीली भाति भुवि राजा ॥ ७ ॥
गाणपतमग्नेः सर्वजनहृद्यम् । भातु भयहारिच्छन्द इदमाद्यम् ॥ ८ ॥

## अथ द्वितीयं वायुगीतम्

दिष्टात्पतितोहं मन्दे नरवृन्दे । त्राणाय समीरं तं संप्रति वन्दे ॥ १ ॥
तारासमचित्रं खेलत्खगजालम् । उद्यानमिदं ते खं वातविशालम् ॥ २ ॥
देवोऽसि बलस्य प्राणोऽस्य खिलस्य । ब्रूयादति मानं कस्ते महिमानम् ॥ ३ ॥
भक्त्या तव पुण्यं तुल्यं क्व नु गण्यम् । तद्भक्ति चरित्रं रैक्वस्य पवित्रम् ॥ ४ ॥
मेयः स च नाकः स्वल्पो नरलोकः । नित्यानिलशुभ्रं निःसीमत वा भ्रम् ॥ ५ ॥
घुष्यन्नसिरुद्रो दीप्यन्नसिशक्रः । गच्छन्नसिवातस्त्रेधाऽसिनुतोऽतः ॥ ६ ॥
सर्वाश्च दिशस्ते व्योमेश्वर हस्ते । भाक्ता पुनरेषा कोणेडिति भाषा ॥ ७ ॥
नित्याध्वग कर्तुं श्रान्तेः परिहारम् । वासिष्ठवचोम्भो हृद्यं पिव धीरम् ॥ ८ ॥
अन्नानि कृशानौ जुह्वत्व दरिद्राः । वायो जुहुमोऽमी वाचस्त्वयि भद्राः ॥ ९ ॥
यद्यप्ययि दिव्यो गुप्तस्तव वेषः । व्योमेश तथाऽपि व्यक्तस्तव घोषः ॥ १० ॥
आकाश गृहाणामात्माऽसि सुराणाम् । वीर्यद्रविणानां कोशोऽसि नराणाम् ॥ ११ ॥

त्वामाह सरैकः संवर्गमनन्तम् । स्वस्मिंसुदृढानां दुःखानि हरन्तम् ॥ १२ ॥
मूलं तपसां त्वं देवासि ऋषीणाम् । लोके सकलानां हेतुश्च कृषीणाम् ॥ १३ ॥
दानार्थमसूनां प्राप्तक्षितिरङ्गाः । एते तव वाताः खेशानतरङ्गाः ॥ १४ ॥
आत्मा मरुतां त्वं कैरप्यसि गीतः । कैरप्यधिराजः कैरप्ययि तातः ॥ १५ ॥
आत्मा मरुतां त्वं गीतः पृषदश्वः । राजा पुरुहूतस्तातो निगमाश्वः ॥ १६ ॥
वातस्तव वीचिर्विद्युत्तव कायम् । तारस्तव शब्दो देवाधिपसोऽयम् ॥ १७ ॥
वेदादिमनादिं तारं प्रणवाख्यम् । ध्यायन्ति विदो ये तैः स्यात्तव सख्यम् ॥ १८ ॥
वातोऽस्यधिभूतं शक्रोऽस्यधिदैवम् । रुद्रोऽस्यधिपिण्डं पक्षान्तरमेवम् ॥ १९ ॥
गीताः कविराजा सर्वस्तव भाजे । एतास्तनुमध्यास्ताताय खराजे ॥ २० ॥

## अथ तृतीयमिन्द्रगीतम्

धर्ता सुकृतानां हर्ता दुरितानाम् । भर्ता नभसो मे कर्ताऽस्तु शुभानाम् ॥ १ ॥
ख्यातामितवीर्यो धर्ताखिलवैरी । नेता विबुधानां त्राता भवतान्मे ॥ २ ॥
विक्रम्य विधुन्वन्वक्रान्समरेषु । चक्रायुधमित्रः शक्रः शरणं नः ॥ ३ ॥
शक्रः शुभवित्तां लक्ष्मीमनियत्ताम् । आनन्दितचित्तां मह्यं भुवि धत्ताम् ॥ ४ ॥
नाकं त्वमरक्षः पाकं युधि जित्वा । वृत्रं च विधूयामित्रं पविपाणे ॥ ५ ॥
एतानि विकुर्वन्भूतानि सपाकः । शुभ्रे विफलोऽभूदभ्रे तव जिष्णो ॥ ६ ॥
पाकः प्रभुरेव प्राणांश्च विकर्तुम् । यद्यम्बरनाथ त्वं न प्रतिकर्तुम् ॥ ७ ॥
स त्वं यदि रोद्धावृत्तः परिभूय । प्रज्ञामयि विश्वं दद्यात्तिमिराय ॥ ८ ॥
प्रज्ञामुषसं त्वां ज्ञं चाजितसूर्यम् । यद्रक्षसिवृत्रात्तत्ते सुरकार्यम् ॥ ९ ॥
संमोहनशक्तिर्वृत्रस्य तु निद्रा । संबोधनशक्तिर्विद्युत्तव भद्रा ॥ १० ॥
नादान्तविभास्यं वेदान्तरहस्यम् । मोदान्तरयोधं भेदान्तकमीडे ॥ ११ ॥
वायुं विचरन्तं रुद्रं निनदन्तम् । भान्तं मघवन्तं वन्दे भगवन्तम् ॥ १२ ॥
प्राणं मदनारिं भूतं पवमानम् । देवं मघवानं ध्यायाम्यतिमानम् ॥ १३ ॥
इन्द्रं प्रभजन्तामेतास्तनुमध्याः । नाथं गुणवत्यो यद्वत्तनुमध्याः ॥ १४ ॥

## अथ चतुर्थं सूर्यगीतम्

भुवनत्रयपतिमूर्धजमध्ये दीप्यन्मणिरयमह्निमयूखः ।
भुवनत्रयतोऽप्यधिके मूल्ये भवतां संपदमतुलां भणतु ॥ १ ॥
एतन्मण्डलमतुहिनभानोर्भासां स्थानं निगमनिधानम् ।
विप्रैर्वन्द्यं काले काले विश्वप्राणायतनं जयति ॥ २ ॥
शंभोः केशे वपुषाकेन श्रोत्रेमातुर्वपुषाकेन ।
राजसि नलिनीप्रियदम्पत्योर्भूषणमसिवा पर्यायेण ॥ ३ ॥
कश्चन दक्षिणनयनं भर्तुर्मूर्तिं कामपि भणतिविदन्यः ।
अपरो भवनं भुवनं त्वितरः प्राणं दशशतकिरणपरस्त्वाम् ॥ ४ ॥
प्राणिति भवता पश्यति भवता खादति पाति च भुवनं भवता ।
भाति च भवता भास्करभवतो महाभाग्यं न भणिति मार्गे ॥ ५ ॥
हृदयं यद्वज्जीवानां नो मण्डलमेतन्नाथस्यैवम् ।
तस्मादेतत्परिदृष्टान्तैर्हृदयसमष्टिः कथिता शिष्टैः ॥ ६ ॥
मण्डलमध्येयत्तज्ज्योतिर्हृदयस्यान्तर्यत्तज्ज्योतिः ।
भवति तदस्मिन्नक्षिणिगम्यं रम्यं पूर्णं मम खलु काम्यम् ॥ ७ ॥
क्षेत्रे क्षेत्रे बहुशोऽन्विष्टं लोचनमण्डलमध्ये दृष्टम् ।
कष्टं गलितं फलितं चेष्टं पुनरस्माकं किं परिशिष्टम् ॥ ८ ॥
साक्षिणिमक्षिणि निश्चलदृष्ट्या निर्मलनभसि स्थितयाद्वारा ।
लक्ष्यं रात्रावपि दिननाथं पश्यतनश्यं मुञ्चत निखिलम् ॥ ९ ॥
नरकामानामयमिहराजा जागर्त्यक्षिणिसायं पाता ।
सुरकामानाभीशानोऽसौ सूर्ये भाति प्रातः पाता ॥ १० ॥
ज्ञानाकारं तेजः पश्यत्प्रतिबिम्बं वा पुंसो हैमम् ।
धीरोध्यायन्नयनस्थाने पाशैर्मुक्तः कृतकृत्यः स्यात् ॥ ११ ॥
निःशेषाभिः सहितं श्रीभिर्निर्हृतपाप्मनिदहरसरोजे ।
कृतिनः किरणैरङ्गुष्ठाभं तं लोकेरन्पुरुषमणिष्ठम् ॥ १२ ॥
परमविदुस्त्वां पावकमवनौ दिविरविमम्बर भुवनेशाक्रम्
आत्मानं वा ज्योतिर्वैकं जगतां भेदात्कवयस्त्रेधा ॥ १३ ॥

वैभवशाली दीधितिमाली प्रशमितपापस्त्रिभुवनदीपः ।
दिवि भाति रविर्यत्राचरतश्चरतश्चेशितृपरमं ज्योतिः ॥ १४ ॥
जयति विवस्वान्दशशतधामा जयति च तस्मिन्परमं धाम ।
पादाकुलकैर्नुतिरदसीया गणपतिमुनिना रचिता जयति ॥ १५ ॥



## अथ पञ्चमं दशावतारगीतम्

वेदचोरमाशरं विमथ्य सोमकं पुरा यः स्मृतिं ध्रुवां पुनः सुताय भास्वतो ददौ ।
सिन्धुवारि बन्धुरासनौधरस्तपस्विनां यश्च तं सखे भजस्व झाषवेषमच्युतम् ॥ १ ॥
मन्दराद्रिधारिणे महेन्द्रकार्यकारिणे मौनिचित्तचारिणे महोग्रपापहारिणे ।
अञ्जलिं कुरुष्व भो हरिलतान्तमञ्जुलस्वच्छकीर्तये विलासकच्छपाय विष्णवे ॥ २ ॥
काञ्चनाक्षमुष्णरश्मिजालया दृशैकया च्यावयन्तमोजसः प्रदीप्तघोरतारया ।
सान्त्वयन्तमन्ययादयार्द्रया वसुन्धरां शीतलत्विषा हरिं किरिच्छलं स्मरान्तरे ॥ ३ ॥
प्राणमुज्जहार दैत्यवक्षसो विदारितायो नखैरखर्वशक्ति पौरुषोज्ज्वलन्तुषा ।
आसुरात्कुलाच्छ्रियं सुपर्वचेतसो भियं नारसिंहमूर्तिरार्तिमच्युतः स हन्तु ते ॥ ४ ॥
त्रीणि यः पदान्यजः समन्ततो विचक्रमे नाङ्गुलं यथाऽत्यरिच्यतात्र दिव्यमुत्र वा ।
नाकचारिणोऽधिकर्तुमाशु हर्तुमासुरीं संपदं च तं परं पुमांसमाश्रयस्वरे ॥ ५ ॥
योऽर्जुनं भुजाबलेन निर्जिगाय दुर्जयं चेतसावशंवदेन पर्यभूदनन्यजम् ।
लोभमासमुद्रभूमिदानकर्मणाऽजयद्रैणुकेयभूमिकः स ते स्यताद्भियं हरिः ॥ ६ ॥
वाक्यकृत्युतः पितुः प्रभुश्च रक्षिता विशामग्रजोऽतिवत्सलो नियामको नु जन्मनाम् ।
श्रीकरः सतां सखा द्विषां च भीकरो रिपुः सीतया कलत्रवान्नरो हरिर्धिनोतु वः ॥ ७ ॥
भूमिभारवारणाय यो यदुष्वभूद्विभुर्विस्मयं शिशोश्च यस्य चेष्टितानि तेनिरे ।
शर्म वः स पूरुषो रथाङ्गमायुधं दधत्कर्मयोगदेशिकः करोतु पार्थसारथिः ॥ ८ ॥
भारतं न केवलं चतुःसमुद्रमुद्रितं भूमिखण्डमेव यो व्यभूषयन्निजैर्गुणैः ।
तस्य पूरुषोत्तमस्य बुद्धनामधारिणः पावनीकथा मुदे विदां नदीव नाभसी ॥ ९ ॥
गायतस्तुताद्रियध्वमाश्रयध्वमुत्तमं पूरुषं पुराणमर्कमण्डलान्तरालयम् ।
कल्कभारवारणाय कल्किभूमिकाधरो योऽयमस्य भूतलस्य रक्षणाय चेष्टते ॥ १० ॥



## अथ षष्ठं रेणुकागीतम्

❀ सुरशिरश्वरच्चरणरेणुका । जगदधीश्वरी जयति रेणुका ॥ १ ॥
देवता शिरोदेशलालितम् । रेणुकापदं विशतु मे मुदम् ॥ २ ॥
कुण्डली पुरी मण्डनं महः । किमपि भासतां मम सदा हृदि ॥ ३ ॥
+ मस्तकैतवं वस्तु शाश्वतम् । अस्ति मे सदा शस्तदं हृदि ॥ ४ ॥
आदिनारि ते पादपङ्कजम् । स्फुरतु मे मनः सरसिजे सदा ॥ ५ ॥
+ केवलं पदोः सेवकोऽस्मि ते । वेद्मि नेतरद्वेदसन्नुते ॥ ६ ॥
हृदयतेऽणुनः समुचितोणुना । परिचयोम्बिका पादरेणुना ॥ ७ ॥
पाहिमुञ्च वा पादपङ्कजम् । त्रिदशसन्नु ते न त्यजामि ते ॥ ८ ॥
चरणमम्ब ते यो निषेवते । पुनरयं कुचौ धयति किं कृती ॥ ९ ॥
अहरहोम्ब ते रहसि चिन्तया । धन्यतां गतो नान्यदर्थये ॥ १० ॥
❀ स्मरजितो यथा शिरसि जाह्नवी । जननि रेणुके मनसि ते कृपा ॥ ११ ॥
+ अम्ब पाहि मां दम्भतापसि । पादकञ्जयोरादिकिङ्करम् ॥ १२ ॥
पुत्रमात्मनः पुण्यकीर्तने । बहुकृपे कुतो मामुपेक्षसे ॥ १३ ॥
+ अम्ब संस्तुते जम्भवैरिणा । पाहि मामिमं मग्नमापदि ॥ १४ ॥
+ तत्त्ववादिनः सत्वशालिनि । त्वामजेविदुः सत्स्वरूपिणीम् ॥ १५ ॥
त्वां प्रचक्षते सदयवीक्षिते । वेदवेदिनो मोदरूपिणीम् ॥ १६ ॥
संविदं विदुः त्वामिदं प्रसूः । परमयोगिनः परमदेवते ॥ १७ ॥
जननि कुण्डलीपुरनिवासिनी । परशुरामवत्पश्यमामिमम् ॥ १८ ॥
❀ तनयरोदनं श्रवणशालिनि । शृणु सुरार्चिते यदि दया हृदि ॥ १९ ॥
याचकः सुतो भजनमीप्सितम् । तदपि दुर्लभं किमिदमम्बिके ॥ २० ॥
मास्तु वेतनं छिन्नमस्तके । भजनमेव ते याच्यते मया ॥ २१ ॥
तरलतारया जलजदीर्घया । सानुकम्पया शीतपातया ॥ २२ ॥
केवलं दृशा पश्य रेणुके । तेन मे शुभं न च तवाशुभम् ॥ २३ ॥
किंकरी भवत्सुरविलासिनी । जयति कुण्डलीनगरवासिनी ॥ २४ ॥
मधुरमम्ब ते चरणपङ्कजम् । तत्र यद्रतैस्त्यज्यते खिलम् ॥ २५ ॥

चरणमम्ब ते चरतु मे हृदि । इयमनामये प्रार्थना मम ॥ २६ ॥

❀ भुजगकङ्कणप्रभृति संस्तुते । भुजभुवामरेर्जननि पाहि माम् ॥ २७ ॥

कुण्डलीपुरीमण्डनायिता । गणपतिस्तुता जयति रेणुका ॥ २८ ॥

❀ पुष्पाङ्काश्चतस्रो नरगणवत्यो गायत्र्यः ।

\+ हंसपदाङ्काः पञ्चरलगवत्यः सुप्रतिष्ठाः ।

शेषा उभयोपजातयः ।

---

## अथ सप्तममम्बिकागीतम्

❀ सेवकपातकशमनं दैवं मानसवाञ्छितफलदं दैवम् ।
सज्जनरक्षणचतुरं दैवं दुर्जनमर्दनपरुषं दैवम् ॥ १ ॥

\+ भास्करबिम्बेदीप्तं दैवं लोचनमध्येसुप्तं दैवम् ।
सितकरमण्डलगुप्तं दैवं त्रिगुणितभुवनव्याप्तं दैवम् ॥ २ ॥

❀ बहुशतचेटीसहितं दैवं रेणुसमष्टयाविहितं दैवम् ।
अम्बरसौधेनिहितं दैवं भैरववदनाभिहितं दैवम् ॥ ३ ॥

\+ असुरुचिपद्याभूतं दैवं वसुरुद्रार्कैर्गीतं दैवम् ।
क्षितिजलशुचिषुप्रोतं दैवं शितमतिभिः समधीतं दैवम् ॥ ४ ॥

\+ मृदुहृदयानां सौम्यं दैवं प्रियरूपाणां रम्यं दैवम् ।
तत्त्वज्ञानां विश्वं दैवं गुणविरूचीनां शून्यं दैवम् ॥ ५ ॥

चालकमवनेः शक्त्या दैवं शंपाद्वाराद्दृश्यं दैवम् ।
दोग्ध्रीमनुवरवाच्यं दैवं विदधद्विनतमशोच्यं दैवम् ॥ ६ ॥

शैले शैले विहरद्दैवं विपिने विपिने विचरद्दैवम् ।
ग्रामे ग्रामे ख्यातं दैवं नगरे नगरे प्रथितं दैवम् ॥ ७ ॥

परितो व्योम्नि निराकृति दैवं स्वर्गे पौलोम्याकृति दैवम् ।
हिमवति गौरीरूपं दैवं तनुषु प्राणाकारं दैवम् ॥ ८ ॥

अर्धं सुरगिरिधनुषोदैवं भुवनत्रितये पूर्णं दैवम् ।
हृदि भूतानां किंचिद्दैवं तृणवन्मनसि प्रचुरं दैवम् ॥ ९ ॥

लज्जाभावो ललितं दैवं रसनाभावो भीमं दैवम् ।
दृष्टौ दृष्टौ सूक्ष्मं दैवं विषये विषये स्थूलं दैवम् ॥ १० ॥
स्तोत्रे स्तोत्रे मधुरं दैवं ध्याने ध्याने मदकृद्दैवम् ।
नमने नमने वरदं दैवं चरिते चरिते पूतं दैवम् ॥ ११ ॥
आकाशामलगात्रं दैवं तारारविशशिनेत्रं दैवम् ।
व्यापकपवने श्वसितं दैवं पारावारस्वेदं दैवम् ॥ १२ ॥
\+ लीलानारीवेषं दैवं दिव्यहिरण्मयभूषं दैवम् ।
केषांचित्कृतपोषं दैवं केषांचित्कृतशोषं दैवम् ॥ १३ ॥
पोषविधाने शीतं दैवं शोषविधाने तपनं दैवम् ।
सर्गविधाने विकसद्दैवं प्रलयविधाने मीलद्दैवम् ॥ १४ ॥
\+ सोमं पीत्वा पुष्टं दैवं द्विषतो हत्वा हृष्टं दैवम् ।
भुवनप्रलये शिष्टं दैवं सर्वपदार्थोत्कृष्टं दैवम् ॥ १५ ॥
कौलाचारिषु माद्यद्दैवं समयाचारिषु शान्तं दैवम् ।
योगाचारिषु पीनं दैवं ज्ञानाचारिषु लीनं दैवम् ॥ १६ ॥
कामविरोधि कलत्रं दैवं गणपषडाननपुत्रं दैवम् ।
पापविदारि पवित्रं दैवं जयति मुनिस्तुतिपात्रं दैवम् ॥ १७ ॥

* पुष्पाङ्के द्वे मात्रासमके । + हंसपदाङ्काः षड्उपचित्राः । शेषाणि पादाकुलकानि ॥

इति श्रीभगवन्महर्षिरमणान्तेऽवासिनो वासिष्ठस्य नरसिंहसूनोर्गणपतेः कृतिः सप्तगीती समाप्ता ।



# अथ हेरम्बोपस्थानम्

## प्रथमः खण्डः

एकादशानां प्रवरं सुतानां रुद्रस्य मन्त्राधिपतिं नमामि ।
शात्राणि सर्वाण्यपि यस्यकीलाः सूर्यानपोद्यं तिमिरंहरन्ति ॥ १ ॥
प्राज्ञेन बुद्ध्या यदकारि पद्यं साधारणस्तत्र तवोपकारः ।
हेरम्ब यन्मन्त्रमृषिश्चकार व्यक्तो विशिष्टस्तव तत्र यत्नः ॥ २ ॥
जिह्वास्थलं नाथ विगाहमानं त्वामाहुरुच्छिष्टमिहच्छलोक्त्या ।
उच्छिष्टता चेत्तवरुद्रसूनो स्वाध्यायनिष्ठीवनयोर्भिदाका ॥ ३ ॥
सर्वाणि धान्यानि च भक्षयन्तं दन्तैः शितैर्देवसहायवंतम् ।
एतं बिलस्थं रसनाह्वयन्ते वाहंविदो मूषकमामनन्ति ॥ ४ ॥
आधारचक्रे वसतो गणेशज्योतिर्मयाणोज्वलतः सदाते ।
एकः पचत्यन्नमशेषमूष्मा संप्रेरयत्यन्य इमास्तु वाचः ॥ ५ ॥
वैश्वानरोग्निः सकलस्यजीवो वागिन्द्रियाग्निः शिवनन्दनत्वम् ।
यो वेदनैवं युवयोर्विभेदं पिण्डेषु ना मुह्यति सप्रसङ्गे ॥ ६ ॥
त्वां ब्रह्मणस्पत्यभिधानमाहुः केचिद्विभोरीशपदस्य पुत्रम् ।
अन्यैर्बृहस्पत्यभिधान उक्तो धीरैर्विभोरिन्द्रपदस्य मन्त्री ॥ ७ ॥
जिह्वैववेदिस्तवतोयपूता लोकप्रसङ्गस्तव तत्र धूमः ।
ज्वाला जगन्नाथकथा पवित्रा चेतोघृतं जुह्वति यत्र सन्तः ॥ ८ ॥

---

## अथ द्वितीयः खण्डः

आह प्राज्ञजनस्त्वां मूलाधारनिशान्तम् ।
मन्दे सुप्तमिभास्य ज्ञे युक्ते विलसन्तम् ॥ १ ॥
अस्ति व्योम्नि गुरुर्यस्तस्यैवत्वमिहासि ।
विघ्नेशानविवर्तः सद्भक्तेषु विभासि ॥ २ ॥
कोपि प्रभावशाली मूलाधारविहारी ।
प्रज्ञासिद्धिबधूभ्यां श्लिष्टो भात्यघहारी ॥ ३ ॥
आशा मे तवशक्तिं देहे द्रष्टुमपाराम् ।
पातुं चेश्वरसूनोर्मूर्धन्यामृतधाराम् ॥ ४ ॥

या चित्सा तव माता यः श्रेष्ठः स पिता ते ।
सिद्धिर्बाह्यमतिर्ये तेनाथ प्रमदेते ॥ ५ ॥
या लिप्सा हृदये मे तां पूर्णां कुरु मावा ।
एषाङ्गी क्रियतां मे मत्तेभाननसेवा ॥ ६ ॥
ना खे याति सुरो वा त्वं चेत्किंचिदुदास्यम् ।
आधारे विदधासि स्कन्दस्याग्रजलास्यम् ॥ ७ ॥
न स्वार्थे मम यत्नो निःस्वार्थे मम सोयम् ।
उद्योगः शिवसूनो सद्यो देहि सहायम् ॥ ८ ॥
माहात्म्यं ननु वक्तुं कः शक्तः पुरुषस्ते ।
हस्तीन्द्राननभाग्यं सर्वेषां तव हस्ते ॥ ९ ॥
एताः सम्मदकर्त्री हैरम्बीर्मदलेखाः ।
सेवन्तां कविभृङ्गाश्चान्द्रीर्भा इव लेखाः ॥ १० ॥

## अथ तृतीयः खण्डः

किं बृंहितानि कुरुषे कलुषेण भग्ने मग्ने महाविपदि देव निजे विवर्ते ।
निद्रामि चेद्द्विरद बोधय हस्तघाताद्गच्छामि चेदपथमाशु निवर्तस्व ॥ १ ॥
वेषस्तवायमपरो यदि देवनाट्यमारभ्यतां तदुचितं किमुपैषि मौनम् ।
एतां प्रभो यवनिकामपसारयन्तु साक्षाद्गणस्तव कुतः क्रियते विलम्बः ॥ २ ॥
एतत्तमो नयनशक्तिहरं गुहायां मार्गं रुणद्धि न विलोकितुमस्मि शक्तः ।
स्नेहोऽस्ति काचन दशाऽस्ति विभोकटाक्षज्योतिर्लवं सदयदेहिपुरोव्रजेयम् ॥ ३ ॥
घोरं करोमि न तपो यदि तेऽपराधः किं प्रेरणं न कृतवानसिरुद्रसूनो ।
संप्रेरितश्च भवता यदिनाचरेयम् संप्रेरणस्य तव का गजवक्त्रशक्तिः ॥ ४ ॥
कार्यं न मे किमपि तत्खलु निर्जराणां रूपं न मे किमपि तत्तव कोपि वेषः ।
इष्टं नु कष्टमथ कस्य करीन्द्रवक्त्र शिष्टन्तु मे किमपि नाम नराङ्गसङ्गि ॥ ५ ॥
नामापि तत्तव भवत्यथवा गजास्य चर्चा विनश्वरतमे तनुकञ्चुकेका ।
विष्णोरिवेन्दुधवलं भवितायशश्चेत् तद्वन्न कान्तिषु तवै बलयं प्रयातु ॥ ६ ॥

इति श्रीभगवन्महर्षिरमणान्तेऽवासिनो वासिष्ठस्य नरसिंहसूनोर्गणपतेः
कृतिः हेरम्बोपस्थानं समाप्तम् ॥

# गुरुमन्त्रभाष्यम्

## प्रथमः पटलः

### मन्त्रोद्धारः

वेदादिपादकमनोत्तरकच्छपेशैर्युक्तैर्धराधरसुषुप्त्यमरेश्वरैश्च ।
सूक्ष्मामृतायुगमृतेन सह प्रणत्या संपन्नशब्दपटलस्य रहस्यमर्थम् ॥

र. गी. १८ १० ।

वेदादिः प्रणवः । पाकद्मनादिन्द्रबीजाल्लकारादुत्तरो वकारः पाकद्मनोत्तर उच्यते । कच्छपेशः कूर्मेशनामकरुद्रस्य बीजं चकारः । तैः ॐ व च इत्येतैरक्षरैः । धराधरः पर्वतबीजं दकारः । सुषुप्तिर्निद्रानामकशक्तेर्बीजं भकारः । अमरेश्वरः अमरेश्वरनामक रुद्रस्य बीजमुकारः । तैर्युक्तैः द्भु इत्येतेनाक्षरेणेति यावत् । सूक्ष्मामृता सूक्ष्मामृतनामकशक्तेर्बीजमेकारः । तद्युक् तद्युक्तम् अमृतं तोयबीजं तेन "वे" इत्यक्षरेण । प्रणत्या नमः इति पल्लवेन च सह मिलित्वा । संपन्नशब्दपटलस्य" ॐ वचद्भुवे नमः इति मन्त्रस्य ।

रहस्यं तत्त्ववेत्तृभिरेव ज्ञातुं शक्यम् । अर्थं वाच्यभूतं रमणं भगवन्तममृतनाथ यतीन्द्रः पृष्टवानित्युत्तरेणान्वयः । एवं च भगवतो गुरोर्मन्त्रः । ॐ वचद्भुवे नमः इति पर्यवस्यति । नन्वयं शारदातिलकादिषु तन्त्रेषु स्कन्दमन्त्रत्वेन प्रसिद्ध इति चेत् । अत एवायं भ्रमो भगवतो गुरोरेष मन्त्र इति । रमणो हि भगवान्गुरुर्भगवतः सनत्कुमारापरपर्यायस्य स्कन्दस्य कारणगुरोस्तेजोंशावतारः ।

### मन्त्रशरीरम्

सोऽयं महामन्त्रो मूलतः षडक्षरो वचद्भुवे नम इति । सामान्यतः सर्वमन्त्राणामादौ कैश्चित्तान्त्रिकैः प्रयुज्यमानेन प्रणवेन सह सप्ताक्षरो भवति । यथा नमः शिवायेति पञ्चाक्षरः । प्रणवेन सह षडक्षर एवमत्रापि ।

सर्वस्याश्च देवतायाश्चत्वारि रूपाणि भवन्ति एकमाध्यात्मिकम् । अन्य-

दाधिभौतिकम्। इतरदाधिदैविकम्। परं मन्त्रात्मकमिति। उत्तरत्रायं निगमो भवति।

"वाचमष्टापदीमहं नवस्रक्तिमृतस्पृशम्। इन्द्रात्परितन्वं ममे॥

ऋ. सं. ८ म. ६५ सू. १२ म.

सबालखिल्यपक्षे ७६ सू. अनया ऋचा ऋषिरिन्द्रस्य मन्त्ररूपां तनुमहं सृजामीत्याह। तान्त्रिकाश्चाहुः। देशिके मानवभ्रान्तिं प्रतिमासु शिलामतिम्। मन्त्रेष्वक्षरबुद्धिश्च कुर्वाणो निरयं व्रजेत्। इति सुप्रसिद्धस्य तत्सवितुरित्यस्य मन्त्रस्य गायत्री देवतेति जनवादश्चात्र लिङ्गम्। गायत्री च मन्त्र एव भवति न काचन स्त्री छन्दोनामत्वात्तस्य पदस्य। किं फलितम्? भगवतो गुहस्य मन्त्र एव भवति न काचन स्त्री छन्दोनामत्वात्तस्य पदस्य। किं फलितम्? भगवतो गुहस्य मन्त्रात्मकं शरीरं षडक्षरमिति पर्यवसन्नम्। अस्मिन्मन्त्रात्मकशरीरपक्षे षडक्षराण्येव षण्मुखानि भगवतः। यथा पञ्चाक्षराण्येव पञ्चमुखानि परमशिवस्य। एवं मन्त्रमयी देवतेति वदन्तो मीमांसकाः सङ्गच्छन्ते।

## सामान्यतो मन्त्रार्थः

ओं ब्रह्मस्वरूपाय ओंकारस्याव्ययत्वात्सर्वाभिर्विभक्तिभिरन्वयः सिद्ध्यति। ओंकारस्य ब्रह्मवाचकत्वमुपनिषत्सु प्रसिद्धम्। वचद्भुवे वचद्भः वदतः वाक्यानि सृजतः (वागिन्द्रियरूपादग्नेरित्यर्थः) भवतीति वचद्भूस्तस्मै नमः। स्कन्दस्याग्निभूत्वं प्रसिद्धम्।

## कथं ब्रह्मस्वरूपो देवतात्मा

उक्तः सामान्यतो मन्त्रार्थः। अथ तद्विशेषा विचार्यन्ते स्कन्दश्च कश्चिद्देवतात्मा स कथं ब्रह्मस्वरूपो भवति ब्रह्म च सर्वदेवातीतं परं वस्तु। ननु ब्रह्मणः सर्वात्मकत्वात्स्कन्दस्य ब्रह्मस्वरूपत्वमविरुद्धमिति चेत्। सिद्धः शब्दार्थः उपासने दोषस्तु भवति। निकृष्टे उत्कृष्टभावनोपासने श्रेष्ठा। नोत्कृष्टे निकृष्टभावना। अत एवाह बादरायणः 'ब्रह्मदृष्टिरुत्कर्षात्' इति।

ब्रह्मस्वरूपो गुहो यद्युपास्यः ब्रह्मणि व्यापके व्याप्यगुहदृष्टिः प्रसज्येत। वषड्‌ढुवे गुहस्वरूपाय ओं ब्रह्मणे नम इत्यर्थे दोष एष निवार्येत। मन्त्रस्तु गुहस्य न स्यात्। ब्रह्मण एव भवेत् तच्च प्रतिज्ञातविरुद्धम्। एवमुभयथाऽपि संशये प्राप्ते ब्रूमः। अस्तु ब्रह्मस्वरूपाय गुहायेत्येवार्थः। ब्रह्मस्वरूपं यस्य स ब्रह्मस्वरूपः। अपकर्षोत्कर्षभावश्च गुणापेक्षो। निर्गुणे ब्रह्मणि क्वोत्कर्षोऽपकर्षो वा। यथा गुणापेक्ष्येष भावस्तथा भेदापेक्षो च भवति। पूर्णस्य ब्रह्मणः कस्मादुत्कृष्टत्वम्? यहि स एवात्मा सर्वं स कस्मादुत्कृष्टः स्यात्? तस्य चोत्कर्षो विभूतिद्वारा लोकेऽनुभूयते। अपकर्षस्त्वल्पज्ञजीवद्वारा। तस्माद्यथोत्कृष्टमुपाधितो ब्रह्म तथाऽपकृष्टमपि। प्रकृते उपास्यो गुहः उपासको जीवः। उपाधिविरहे तूभावपि ब्रह्मस्वरूपौ। तस्मादभिन्नौ। एवमभेदे किं गुहे स्वात्मानं भावयित्वोपासीत उताहो स्वात्मनि गुहमिति संशये उत्कर्षादात्मनि गुहदृष्टिर्गरीयसीति न्यायो लगति। ब्रह्मदृष्टिरुत्कर्षादिति सूत्रमप्युपासनप्रकरणस्थसगुणपरम्। तस्मान्नास्ति कश्चिद्विरोधः।

सिद्धं मन्त्रे ब्रह्मस्वरूपो गुह उपास्य इति।

ब्रह्मस्वरूपत्वं च गुहस्य ब्रह्मणो विश्वात्मकत्वात्सिद्ध्येत्। अत्रायमपरः संशयः। यदुच्यते गुहस्याधिदैविकं स्वरूपं भक्तानामनुग्राहकं कालेषु तेजोंशेनाविशत्तदहीनपहतपाप्मनो जीवान्। तत्किं सगुणस्य ब्रह्मणो रूपम्; उताहो कस्यचित्सिद्धपुरुषस्य देवयोनेः कोऽनयोर्विशेषः पूर्व ईश्वरो विश्वसमष्टिशरीराभिमानी भक्तानुग्रहाय मायया धृतदिव्यशरीरः। उत्तरो जीवकोटिष्वन्यतमो व्यष्टिभूतो धर्मातिशयात्प्राप्तदिव्यशरीरः। अस्त्वीश्वर एव स्कन्द इति चेदनेकेश्वरापत्तिरितरासां च देवतानां माहाभाग्ये स्कन्दादविशेषात्। अस्तु जीवेष्वन्यतम इति चेन्निकृष्टः प्रसज्येतात्रोच्यते। ईश्वर एव स्कन्दः। न जीवकोटिष्वन्यतमः। न तेनानेकेश्वरापत्तिः लोककार्यार्थं सगुणं ब्रह्म मायया यावल्लोकं रूपाणि बिभ्राणो विश्वं चालयति। सामान्यतः सिद्धपुरुषाणामपि मायया बहुरूपधारणसामर्थ्यमस्ति चेदीश्वरस्य किमु वक्तव्यम्? तेष्वीशस्य मायारूपेषु लोककार्यार्थेषु स्कन्दस्याधिदैविकं रूपमन्यतमन्। तादृशानीशस्य मायारूपाण्याधिकारिकाण्युच्यन्ते।

नारायण एक एवेश्वरस्याधिदैविकं रूपमिति वैष्णवाः । परमशिव एक एवेति शैवाः । गणपतिरेक एवेति गाणपताः । सवितैक एवेति सौराः । इन्द्र एक एवेति माहेन्द्राः । यह्व एक एवेति क्रैस्तवाः । ( "तमीमहे पुरुष्टुतं यह्वं प्रत्नाभिरूतिभिः" इत्यादिवैदिकप्रयोगदर्शनादिन्द्रस्यैव नामान्तरं यह्व इति प्रतिभाति ) आह्लाद एक एवेति महम्मदीयाः । ( चन्द्रमण्डान्तरपुरुषस्यैवाह्लाद इति नामान्तरं स्यात्प्रायः । ) सुब्रह्मण्य इति स्कान्दाः । एवं विविधमतस्थानां कलहे किं सत्यमितिचर्चायां नागमानामेककण्ठमुत्तरं लभ्यते । तत्रास्मदुक्तरीत्यैव सामरस्येन समन्वयः कार्यः ।

## अत्रायं निगमो भवति

"इन्द्रमित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः । एकस्येश्वरस्य बहुनामविकल्पा इत्येकः पक्षोऽस्य मन्त्रस्यार्थविचारे । मायारूपभेदवशान्नामभेदकल्पनमित्यपरः पक्षः । उत्तरः पक्ष एव ज्यायान् । तथाहि प्रमाणान्तरसामरस्यं स्यात् । तत्र च तिस्र एव देवता इति नैरुक्तपक्षो ज्यायान् ।

## स्कन्दस्य जनयिताऽग्निः कः

सिद्धं सगुणस्य ब्रह्मणो मायारूपेष्वन्यतमद्गुहस्याधिदैविकं रूपमिति । अथ मन्त्रे वचक्नुरित्यनेन योऽग्निः स्कन्दस्य पितोक्तः । स क इत्यत्र विचार्यते ।

पञ्च तेजांसि लोके सौरं चान्द्रमसं वैद्युतं पार्थिवं शाब्दं चति । शब्दश्च तेजोमयं द्रव्यमेव न गुणः । चलनक्रियावत्वान्नादगुणवत्वाच्च । गुणस्य हि क्रियागुणौ न भवतः । शब्दग्राहकयन्त्रे प्रतिष्ठातश्च शब्दो द्रव्यमवगम्यते । शब्दस्य दूरप्रेषके यन्त्रे प्रथमं तेजो दृश्यते । अनन्तरं तदेव शब्दो भवति । इदं च शब्दस्य तेजोमयद्रव्यत्वे लिङ्गम् । अत्र निगमाश्च बहुवो भवन्ति ।

उदाहरणार्थं द्वौ मन्त्रौ प्रदर्श्येते ।

"इमा अभिप्रणोनुमो विपामग्रेषु धीतयः ।
अग्नेः शोचिर्न दिद्युतः" ॥ ऋ. सं. ८-६-७ ।

अत्र धीतयोऽग्नेः शोचिरिव दिद्युत इत्युच्यते। दिद्युतो नाम ज्योतिष्मत्यः। धीतयो वाण्यः।

"तंत्वा मरुत्वती परिभुवद्वाणी सयावरी।

नक्षमाणा सहद्युभिः" ॥ ऋ. ७-३९-८।

अत्र वाणी द्युभिर्नक्षमाणेत्युच्यते। द्यवस्तेजांसि नक्षमाणा नामयुक्ता।

इदं च शाब्दं तेजो व्यापकं शब्दब्रह्मापरपर्यायं परमशिवस्याधिभौतिकं स्वरूपम्। तस्य रुद्र इति वैदिकं नाम भवति। रौतीति रुद्र इति यास्कस्य निर्वचनम्। एतदेव रुद्राख्यं शाब्दं तेजो मन्त्रे वचदित्यनेन कथ्यते। आध्यात्मिकस्य वागिन्द्रियस्य शब्दब्रह्मविभूतित्वान्नवागिन्द्रियशब्दब्रह्मणोर्भेदः। कुमारस्याग्निभूत्वमेतयाविधया। तत्राग्निः शाब्द एव न पार्थिवः। मन्त्रे स्पष्टं तत्वप्रदर्शनायाग्निभुव इत्यनभिधाय वचद्भुव इत्युक्तम्। अग्निशब्दः पार्थिवे विशेषतः प्रयुज्यमानोपि तेजः—सामान्यवाचकः। तेनाभिधाने सामान्यस्य स्फूर्तिर्भवति। रूढितः पार्थिवस्य वा। स्पष्टतया विशेषस्फूर्तये वचद्भुव इति वचनम्।

## नमस्कारार्थः

अथ जपे नमस्कारस्य तात्पर्यमुच्यते। तत्रायं संशयः। किं मन्त्रस्यावृत्तिसमये गुहस्याधिदैविकं रूपं किमपि भावयित्वा तस्मै स्वेन क्रियमाणो नमस्कारश्च भावनीयः उताहो त्वमुत्कृष्टः अहमपकृष्ट इति बुद्धिरेव नमस्कारस्यार्थः उभयं चायुक्तम्। उभयत्रापि प्रतिमन्त्रावर्तनं भेदबुद्धिरेवाश्रयणीया भवति। अनृतमल्पविभवं किमपि रूपं च देवतायाः कल्पनीयं स्यात्। निजस्वरूपं चालक्ष्यं स्यात्। अन्योऽस्त्यर्थस्तृतीयः। नमस्कारश्चायं न स्थूलशरीरस्य। अपितु सूक्ष्मशरीरस्य। सूक्ष्मं च शरीरं मनः। तस्य च शीर्षं स्थानम्।

### तदुक्तं भगवता गुरुणा।

कीर्त्यते हृदयं पिण्डे यथाण्डे भानुमण्डलम्।

मनः सहस्रारगतं बिम्बं चान्द्रमसं यथा॥ र. गी. ५-१३।

तच्च मनः हृदयस्थमात्मस्वरूपमन्वेष्टुम् अथवा हृदयस्थे निजस्वरूपभूते ज्योतिषि मज्जितुं वा यन्नमति स एव नमस्कारः उभयत्राप्यात्मस्वरूपे स्कन्ददृष्टिरिति विषयो न विस्मर्तव्यः। एवं च मन्त्रजपः सत्यस्वरूपलब्धयः स्यात्। भेदभावनेन च न स्याद्दूषितः। इदं चोपासनद्वयम्—

"हृदिविश मनसा स्वं चिन्वता मज्जतावा" र. गी. २-२।

इति श्लोकपादेन भगवान्महर्षिरुपादिशत्। एवं चात्मनः स्वरूपभूते स्कन्दावतारे भगवति गुरौ मनसा विशामि मज्जामि वेति मन्त्रार्थः पर्यवस्यति।

॥ इति प्रथमः पटलः ॥

---

## द्वितीयः पटलः

### द्वितीयमन्त्रोद्धारः

अथास्मिन्द्वितीये पटले भगवतस्तान्त्रिकं मन्त्रान्तरं व्याख्यायते। तस्यायमुद्धारश्लोकः। "सुखं कृशानुः कीलालं मूर्धन्यश्चानुनासिकः। निद्रावारिच विख्यातो नाममन्त्रो वचद्भुवः। सुखं शवर्णः। कृशानुः रेफः। कीलालं जलं वकारः। मूर्धन्योऽनुनासिको णकारः। निद्रा भकारः। वारि वकारः। एतानि षडक्षराणि मिलित्वा "शरवणभव" इति भवन्ति। एतस्यापि मन्त्रस्य षडक्षरत्वेन स्कन्दस्य षण्मुखत्वं प्राग्वद्बोध्यम्।

### द्वितीयमन्त्रार्थः

शराणां तृणविशेषाणां वनं शरवणम् तस्माद्भवतीति शरवणभवः। अग्निरित्यर्थः। अत्र न शरोपाधिजः साधारणः पार्थिवोग्निर्विवक्षितः। तस्य वचद्भूत्वा संभवात्। या रुद्रस्य तेजोमयं वीर्यं शरस्तम्बे निहितं कुमारोऽभवदिति कथा सा किमपि तत्वमवलम्ब्य वर्तते। तच्चेदं स्वम्। रुद्रः शब्दमयः। तस्य तेजोमयं वीर्यं च सिद्धान्तविद्यस्य महापुरुषस्य सिद्धान्तमन्त्रप्रयोगादुत्पन्नोऽग्निः। स च शरोपाधिमवलम्ब्य वर्धमानः शत्रून् हिनस्ति।

'विद्माशरस्य पितरं पर्जन्यं भूरिधायसम् ।
विद्मोष्वस्यमातरं पृथिवीं भूरिवर्पसम् ।।
ज्याके परिणो न माश्मानं तन्वं कृधि ।
वीडुर्वरीयोऽरातीरपद्वेषां स्याकृधि ।।

अथ सं. का वर्ग २ मन्त्रौ १ २

अनयोर्मन्त्रयोर्वर्ण्यमानः शरस्तृणविशेष एव न वेणुमयो लोहमयो वा बाणः । तस्य भूपर्जन्ययोर्माता पितृत्वेन कथनालिङ्गात् । वेणुरपि वनस्पतित्वाद्भू-पर्जन्ययोः पुत्रो भवितुमर्हतीति चेत् । तत्रैव वर्गे चतुर्थो मन्त्रस्तं सन्देहं निवारयति

यथाद्यां च पृथिवीं चान्तस्तिष्ठति तेजनम् ।
एवारोगं चास्रावंचान्तस्तिष्ठतु मुञ्ज इत् ।।
अत्र मुञ्जशब्देन प्रागुक्तं शरं परामृशति ।
मुञ्जश्च तृणविशेष एव न वेणुः ।।

अतीव लघुतरस्तृणः शत्रुन् हन्तुमस्त्रसंबन्धं विना कथं शक्तः स्यात् ? अस्त्रं च सिद्धमन्त्रमयशब्दोत्पन्नाद्ग्नेर्नातिरिच्यते ।

"इषीकां जरतीमिष्ट्वा तिल्पिञ्जं दण्डनं नडम् ।
तमिन्द्र इध्मं कृत्वा यमस्याग्निं निरादधौ" ।।

अथ सं. १२-२-५४

इषीकातिल्पिञ्जनडास्तृणविशेषाः । दण्डनं वेणुमयं स्यात् । तेष्विषी-काशरतृणस्य पर्यायः । अत्रेन्द्रशब्देन जीव एवोच्यते । रूपं रूपं प्रतिरूपो बभूव इति निगमात् । सचास्त्रविरिसद्धपुरुषः । सकेषीकाद्यन्यतममिन्धनं कृत्वा यमस्य कालस्याग्निं निरादधौ नितरामासमन्तात्पुष्टवान् । आकाशे स्थितमेव विजृम्भ्य-यामासेत्यर्थः । कालश्च शब्दान्नातिरिच्यते । आकाशे सूक्ष्मं स्वरन्नेव शब्दः सर्वपाचको भवति । अत एवोक्तमस्याभिरिन्द्रगीते ।

"सद्व्यापकशक्तिं प्राणं कथयन्ति । व्यक्तेतरशब्दं कालं गणयन्ति" ।।

तस्य चालस्य यमाख्यत्वं रुद्राख्यत्वं च तत्रैवोक्तम् ।

"रुद्रं विदुरेकेनेतर्बहुलीलम् ।
प्राहुर्यममन्ये कायंतव कालम् ।।

इदमुक्तं भवति। आकाशे यः शब्दः ब्रह्ममयः कालमयश्च रुद्रो व्यापकोऽस्ति। तस्य तेजो मन्त्राग्निप्रेरितं शरोपाधिकमस्त्रं नामाग्निर्भवति। स एव सेनानिर्भगवान्। संहर्ता दानवानाम्। कर्ता देवकार्यस्य। ईषीका शब्दा देवेषु शब्दोत्पत्तिः। अस्त्रं च प्राज्ञ इष्वस्त्रमिति व्यवहरन्ति।

"इष्वस्त्रमेषां देवत्वं परित्राणं सतामिव।
भयं वै मानुषो भावः परीवादोऽसतामिव॥"

"भारते यक्षप्रश्ने" एषां क्षत्रियाणामिति परामर्शः। अपि चास्त्रस्यैषीकास्त्रमित्येव मुख्यं नामधेयम्। पश्यत रामायणं भारतं च। शरशब्दोऽस्त्रवाचकोऽपि लक्षणयाऽनन्तरं बाणवाचकोऽभूत्। शरशब्द उपलक्षकोऽन्येषामस्त्रेन्धनानाम्। प्राधान्याच्छरवण भवेत्युक्तिः।

## स्कन्दस्य गुरुत्वोपपत्तिः

नन्वेवं चेत्स्कन्दः संग्रामदेव एव स्यात्। न कारणगुरुरिति चेत्। न सङ्ग्रामदेवत्वं कारणगुरुत्वं प्रतिबन्धकम्। प्रत्युतोपकारकम्। यो बहिरस्त्राग्निर्भूत्वा शत्रून्नाशयति। स एवान्तर्विज्ञानज्योतिर्भूत्वा पाशदहनेन तमसः पारं दर्शयति। शाब्दं ज्योतिरेव ह्यन्तर्विज्ञानम्। एतेनैव ज्योतिषा दिव्यचक्षुष्मान्भवेद्ब्राह्मणः। एतेनैव ज्योतिषा दिव्यास्त्रवान्भवति क्षत्रियः। इदमेव ज्योतिर्ब्राह्मणस्य ब्रह्मत्वम्। इदमेव ज्योतिः क्षत्रियस्य राजत्वम्।

॥ इति द्वितीयः पटलः ॥

---

## अथ तृतीयः पटलः

### गुहस्य वैदिको मन्त्रः

व्याख्यातौ गुरोस्तान्त्रिकौ मन्त्रौ। वेदेष्वस्य मन्त्रा दृश्यन्ते। तेष्वयं स्पष्टो भगवतो मन्त्रः।

"वृषाजजान वृषणं रणाय तमुचिन्नारी नर्यं ससूव।
प्रयः सेनानी रधनृभ्यो अस्तीनः सत्वागवेषणः स धृष्णुः॥

ऋ. सं. ७-२०-५।

वसिष्ठ ऋषिः इन्द्रो देवता त्रिष्टुप् छन्दः। वृषा शब्दब्रह्मरूपो रुद्रः वर्षति विज्ञानमिति व्युत्पत्तेस्तस्य वृषत्वम्। वृषणं ज्वालानां वर्षकं देवं रणाय युद्धाय युद्धं कर्तुमित्यर्थः। जजान उत्पादितवान्। तमुतं देवम्। "उ" इत्यव्ययं स्वसंश्लिष्टस्य नाम्नः औभयद्योतकम्। नारीचित् देवी शक्तिः। चिदित्यनिर्वाच्यताद्योतकमव्ययम्। नाराणामियं नारीतिव्युत्पत्तेर्मनुष्येषु गूढा कुण्डलिनी शक्तिरेवात्र नारीपदेनोच्यते। ससूव सुषुवे। तं कीदृशम्। नर्यं नृषु नेतृषु सिद्धपुरुषेषु भवम्। अयं भावः। सिद्धानां नृणां शरीरे कुण्डलिनी शक्तिः शब्दब्रह्मणः सकाशादस्माग्निरूपमिन्द्रं युद्धाय जनयति।

यो जानोदेवः सेनानीः सेनापतिर्भवति देवानाम्। अध नृभ्यो नेतृभ्यः अस्ति सहायभूतः। इनः स्वामी। सत्वासद्वान् सत्यशक्तिमानित्यर्थः। गवेषणः अन्वेष्टा। स प्रसिद्धो देवः। धृष्णुः शत्रूणां धर्षको भवति।

नन्वत्रेन्द्रः प्रकृतः न सुब्रह्मण्य इति चेत्। नैतत्प्रतिबन्धकम्। इन्द्रनाम साधारणमस्माग्नेः। कुमारनाम विशिष्टम्। कथं साधारणम्? कथं विशिष्टम्? तेज इति सूर्यस्य साधारणं नाम। सूर्य इति विशिष्टम्। बलवतां महाभाग्यवतां भावानामिन्द्र इति साधारणं नाम। विशिष्टानि नामानि तेषां पृथक्पृथग्भवन्ति यथावस्तुतत्त्वम्। सामान्यतो बलस्येन्द्रो देव इति निगमेषु ब्राह्मणेषु च प्रसिद्धम्। अस्माग्निश्च सुतरां बलवान्भावः। तस्मात्तस्येन्द्रनामोपपन्नं परमैश्वर्ययोगात्। अयं चास्माग्निः सेनानीपदलिङ्गात्कुमारः प्रोच्यते विशेषेण। अत्र सर्वत्रान्यत्कारणमुत्तरत्र निवेदयिष्यामः।

## इतिहासोपपत्तिः

बलवद्भिर्दानवैर्व्याकुलिते लोके देवैः प्रार्थितो ब्रह्मारुद्राद्वीर्यामुत्पन्नः कुमारस्तांसंहरतीति किलोक्तवान्। अनन्तरं कामो देवैः प्रेषितो रुद्रं पुत्रसर्गाभिमुखं कर्तुम्। स च दग्धः। ततो गौरी तपस्तेपे। तपसा सन्तुष्टो गौरीं रुद्रः परिणीय तत्सङ्गाद्वीर्यमूर्ध्वमार्गेण विससर्ज। तदग्नावप्सुशरस्तम्बे चेतिक्रमेण स्थानेषु कृतास्पदमन्ततः कुमारः किलाभवत्। तस्यैवं समन्वयः। मायाबलाल्लोकं बाधमानानसुरजातीयाञ्जेतुं मनुष्यसाधनानि सर्वाणि विफलान्यभवन्। असुर-

जातीयाश्चात्र मनुष्यविशेषा एव ग्राह्याः। तेन मनुष्यलोके असुराणामेव राज्यं शाश्वतं प्रसक्तम्। देवाश्चासुरक्षपणायाब्रह्मविद्यामेतामृषिभ्यो दत्तवन्तः। असुराणां नाशेन पुनर्देवभक्तानां राज्यं भूलोके स्थापितमासीत्। इयं कथा परोक्षरीत्येतिहासेनोच्यते। तपस्तपति जीवे प्रथमं तपोमाहात्म्येन कामो दग्धो भवति। तपश्च शब्दब्रह्मतेजो निष्ठेति न विस्मर्तव्यो विषयः। एवं स्वरूपो दग्धोऽपि कामो बीजरूपेणावस्थितस्तपसे गौरीं नाम कुण्डलिनीशक्तिं प्रेरयति। कुण्डलिन्या गौरीत्वं च "पीताभास्वत्यणूपमा" इत्युपनिषदोक्तम्। तन्त्रेषु गौर्याः कुण्डलिनीत्वं सुतरां प्रसिद्धम्। तस्यास्तपसा शब्दब्रह्माविर्भवति। परवाक्स्वरूपमनुभवक्षमं भवतीतिभावः। यदा शब्दब्रह्मणा मिलिता कुण्डलिनी भूयस्तपति तदा शाब्दं तेज आविर्भवक्षमं भवेत्। तच्च सजातीयमान्तरिक्षं शाब्दं तेजः प्रेरयदग्नं भवति। मूलाग्निशीर्षसुधयोः शब्दब्रह्मवीर्यस्य संस्कार एवाग्निगङ्गयाः कतिपयकालस्थितिः। शरस्तम्बे प्रादुर्भावश्च द्वितीयपटले वर्णितः। एते च दानवाः सार्वकालिका एव ग्राह्याः न नियतकालजाः। इतिहासस्य सार्वकालिकतत्वाभिप्रायत्वात्।

## कस्तारकासुरः

ननु तारकवधार्थं स्कन्दस्योत्पत्तिः। स च चारित्रिकः पुरुष इति चेन्न। तारकासुरो पितात्विक एव। तरति सर्वान्मनुष्यानिति तारको मृत्युः। उभयथा मृत्युं जयति गुहः। प्रमादरूपं संसारहेतुं ज्ञानप्रदत्वेन। शत्रुभिश्चिकीर्षितमस्त्रबलात्। अस्यैव तारकस्य पुत्रास्त्रिपुरासुरा इति पुराणेषु कथ्यते। त्रिपुरासुराश्चत्रिभ्यः पाशेभ्यो नातिरिच्यन्ते। तेषां च पिता प्रमादः। प्रमादश्चात्मनश्च्युतिर्देहे पतनम्। देहात्मभाव इति यावत्।

## सेनानीः

ननु मन्त्रे यत्सेनानीपदमस्ति तद्देवसेनानीरिति भावं कथं समर्पयेदिति चेत्। देवराजात् इन्द्रोदेव सेनानीरेव प्रकरणाद्भवति स्पष्टं चेदमन्यत्र मन्त्रे।

"इन्द्र आसां नेताबृहस्पतिर्दक्षिणाय यज्ञः पुर एतु सोमः।
देव सेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रम्॥

ऋ. सं. १०. १०३. ८.

अत्रप्रकरणस्थोऽयं मन्त्रः । अपि च मन्त्रे इन इति परमेवान्तरं स्वामिति-पदंव्यवहरणेऽभूत् । अग्नित्वेनापिरिन्द्र उच्यते निगमेषु ।

बभ्राज सीमनदतीरदब्धा देवा यह्वीरवसाना अनग्नाः ।
सना अत्र युवतयः सयोनीरेकं गर्भं दधिरे सप्तवाणीः ॥"

ऋ. सं. ३.१.६

सप्तवाणीः सप्तच्छन्दांसि । मन्त्रभवश्चाग्निरस्त्राग्नेर्नातिरिच्यते । आग्नेये सूक्ते दाहकत्वसामान्यादेतस्य वचनम् । न पार्थिवत्वोद्देशेन ।

## व्यक्तिविचारः

अथ व्यक्तित्वधारकं सगुणस्य ब्रह्मणो यत्सुब्रह्मण्याख्यं तद्वक्तव्यम् । इन्द्र एव गुहस्याधिदैविकं रूपमिति वदामः । शाब्दाग्नेर्मध्यमस्थानत्वात् । इन्द्रश्चान्तरिक्षलोकपतिः । यदारण्यके इन्द्रं प्रकृत्य सुब्रह्मण्यो सुब्रह्मण्यो इत्युपसंहरति तदेकमत्र लिङ्गम् । इन्द्रस्य संग्रामदेवतात्वेन वैदिकी प्रसिद्धिश्चात्र लिङ्गं भवति ।

शिवस्य किमाधिदैविकं रूपम् ? इन्द्र एव । पिता पुत्रयोर भेदापत्तिरिति चेत् । नैष दोषः । गूढशब्दब्रह्म व्यक्तशाब्दाग्न्यपेक्षया भेदनिर्देशः पितापुत्र-सम्बन्धोक्तिश्च । एतेन शिवसुब्रह्मण्यो व्याख्यातः ।

गणपतेः किमाधिदैविकं रूपम् ? इन्द्र एव । भ्रात्रोरभेदोक्तिरितिचेत् । नैष दोषः । सिद्धमन्त्रतत्प्रेरितास्त्राग्न्यपेक्षया भेदनिर्देशो भ्रातृत्वोक्तिश्च । मन्त्रो हि प्रथमं शब्दब्रह्मणो जायते । अनन्तरमस्त्राग्निः । गणपतिना बृहस्पति-ब्रह्मणस्पती व्याख्यातौ ।

विद्युतः किमाधिदैविकं रूपम् ? इन्द्र एव । अत्रास्ति कश्चिद्विशेषः । विद्युतोऽपि विशिष्टं देवतानामैन्द्रः ।

अन्ये इन्द्रदेवता का आन्तरिक्षा माहाभाग्यवन्तो भावा अत्र विस्तर-भयान्नोच्यन्ते ।

## अवतारभेदोपपत्तिः

इन्द्रो भगवान्येन तेजोंशेनावतरति तस्य विशिष्टं नाम तस्यावतारस्य भवति वैद्युतांशावतार इन्द्रस्य स्वपदेन शब्दब्रह्मांशावतारो रुद्रपदेन मन्त्र-

शक्त्यावतारो गणपतिपदेन शाब्द तेजोंशावतारः स्कन्दपदेन चोच्यन्ते। तत्र गणपतिसुब्रह्मण्यौ भ्रातरौ परस्परसापेक्षौ भवतः।

एवं संग्रहेण गुरोस्त्रयाणां महामन्त्राणामर्थ उक्तः। स्कन्दतत्वविस्तरस्तु दैवतामीमांसायां प्रतन्यते।

इति श्रीभगवन्महर्षिरमणान्तेवासिनो वासिष्ठस्य नरसिंहसूनोर्गणपतेः
कृतिर्गुरुमन्त्रभाष्यं समाप्तम्।
इति तृतीयः पटलः।

## अत्रायमुपसंहारश्लोकः

मुनिना श्रीमुखे सिंहे दिने सूर्येन्दुसंगमे।
सूर्योपरागसमये भाष्यमेतदुदीरितम्॥

## भाष्यानुबन्धः

१—शोभनात् ब्रह्मणः शब्दब्रह्मणो जायत इति सुब्रह्मण्यः।

२—एतेन ब्रह्मगर्भनाम व्याख्यातम्। 'सुब्रह्मण्यो ब्रह्मगर्भः स्वामी शरवणोद्भवः इत्यमरः।

३—कुमारः नित्यार्भकः उत्पद्य कार्यं कृत्वा पुनस्तिरोहितो भवति। अतो नित्यार्भक उच्यते। अर्भको न कुमारक इति निगमोऽत्र भवति (ऐन्द्रे सूक्ते) सद्योजज्ञानोनिरिणाति शत्रूनिति च।

४—एतेन सनत्कुमारनाम व्याख्यातम्। सनत् सदा कुमार इति तत्र व्युत्पत्तिः।

५—सनत्सुजातोऽप्ययमेव। सदा सुजात इति तत्र व्युत्पत्तिः।

६—समानो नन्दनः सनन्दनः गणपतिना सहरुद्रस्य।

७—सनकः शाश्वतः। एवमेतानि चत्वारि नामान्येकस्यैवोक्तानि। प्रायो-विभूतिभेदाच्चतुष्टयोक्तिरिति प्रतिभाति।

## श्रीरामचन्द्रघनपाठी-अरुणाचलप्रशंसा

प्रभवे वर्षे कर्कटराशौ विचरति देवे दशशतकिरणे ।
कृष्णे पक्षे शुभपञ्चम्यां पूर्वाभाद्राश्विन्दोर्दिवसे ॥ १ ॥
भारद्वाजो रामचन्द्रोमहात्मा वेदाचार्यो नैष्ठिकः सत्यसन्धः ।
पुण्यश्लोको भूमिमापूर्यकीर्त्या शोकापेतं शाम्भवं धाम भेजे ॥ २ ॥
अध्यापने व्यसनमभ्यतमं सदापि स्वाध्यायनित्यभजनादपि चाप्रमादम् ।
श्रद्धां परां विहितकर्मसु च क्भूयः पश्याम नाकमुदडीयत रामचन्द्रः ॥ ३ ॥
स्वाध्याय-प्रवचन-धूत-सर्वपापो रुद्राणी मनुवरजाप पूतजन्मा ।
सन्ध्यादि प्रविमल कर्म नित्यसेवी नाकं चेन्न जयति शास्त्रमप्रमाणम् ॥ ४ ॥
रामचन्द्र - घनपाठिना परं स्थानमुत्तममजीयताजरम् ।
शोणशैलनगरं तु वैदिकश्रेष्ठशून्यमभवद्गत - प्रभम् ॥ ५ ॥
कर्मश्रद्धा यदि सुमहती वृत्तमत्यन्तनीचम् ।
श्रेष्ठं वृत्तं यदि सुविमलं कर्मलोपो गरीयान् ॥
एतद्युग्मं मिलितमलसद्राम - चन्द्रेऽभिजाते ।
दृष्टान्तोऽयं भवति धरणीदेवबृन्दस्य मान्यः ॥ ६ ॥
आसीदर्हो ब्रह्ममेधक्रियायाः सोऽयं ब्रह्मा ब्रह्मयज्ञेन पूतः ।
आसीदर्हः सत्कवेः श्लोकगानं प्राप्तुं सत्यामत्यजन्नार्यरीतिम् ॥ ७ ॥
भवतु गणपतेर्वागीशदासस्य सत्या भजतु पदमशोकं रामचंद्रो द्विजेन्द्रः ।
भजतु गुणपयोधेः कीर्तिशेषस्य तस्य प्रविमलगुणसङ्घो वित्तवतस्यपुत्रान् ॥ ८ ॥

# इन्द्रसहस्रम्

## प्रथमः प्रारम्भस्तबकः

मघवते शचीहृदयहारिणे । भगवते नमः कुलिशधारिणे ॥ १ ॥
जयति वृत्रजिज्जयति वज्रवान् । जयति विष्टपत्रितयराज्यवान् ॥ २ ॥
बहुशतेक्षणं भुवनसाक्षिणम् । दहरमन्दिरं भज पुरन्दरम् ॥ ३ ॥
किरणवर्षकं शुचितमे नरे । स्मर वियन्महोनिशि च वासरे ॥ ४ ॥
अयमहं भजाम्ययि महेन्द्र ते । चरणकिङ्करः परिगृहाण माम् ॥ ५ ॥
प्रतिवदेर्नमेवरददासताम् । तव कृपाश्रिते मयि विवर्धताम् ॥ ६ ॥
तव नुतिं शचीदयितविस्तृताम् । विरचयन्नयं व्रजति वन्दिताम् ॥ ७ ॥
अभूतितुम्बुरुप्रभृतिगीतते । स्तुतिविधौ मदं मतिरुपैतिमे ॥ ८ ॥
स्तुतिरियं तनोत्वजर ते नवम् । सुरगिरोगृहे किमपि वैभवम् ॥ ९ ॥
कविगिरां रसो मुनिगिरामृतम् । उभयमस्तु मे गिरिविभो हितम् ॥ १० ॥
ऋतविलोकने जनयताद्बलम् । सुरमहीपतिर्मम गिरामलम् ॥ ११ ॥
कथमलं मनः कथयितुं परम् । नयतु ते महोवरद मे गिरम् ॥ १२ ॥
जगति कस्य वागमलदर्शना । भवति देवता करुणया विना ॥ १३ ॥
तव गुणादिकं भुवनराज मे । स्फुरतु दाहरे सरसिजे हरे ॥ १४ ॥
सकलदर्शिनोमतुलसारया । मम गुहां कुरु त्वमृतधारया ॥ १५ ॥
भवतु शक्रगा भवतु भास्वती । भवतु सत्यदृङ्मम सरस्वती ॥ १६ ॥
तव कृपाकरस्तत्रविधौ रमे । अव महेन्द्रमाम वगिरं च मे ॥ १७ ॥
मधुमुचामृचां परिचयी वृषा । रसकिरां गिरां रसयिता स्तु मे ॥ १८ ॥
कृतिमिमामहं त्रिदशभूपते । रसवतीं सुतामिव ददामि ते ॥ १९ ॥
भवनिषेवितो मम सुभाषया । पतिरिव प्रियोरुचिरयोषया ॥ २० ॥

कृतिरसौ लसद्गुहृदयारसम् । विबुधनाथ ते विशतु मानसम् ॥ २१ ॥
इह महास्तवे लसदसूयया । क्षतिरणुश्च मे न खलहेलया ॥ २२ ॥
कुलिशभृद्यशः कुसुमगन्धिनी । कृतिरियं सतां भवतु नन्दिनी ॥ २३ ॥
भवतु वज्रभृत्सुगुणगायिनी । कृतिरियं जगच्छुभविधायिनी ॥ २४ ॥

इति श्रीभगवन्महर्षिरमणान्तेऽवासिनो वासिष्ठस्य नरसिंहसूनोर्गणपतेः
कृताविन्द्रसहस्रे प्रारम्भस्तबकः प्रथमः ॥



## द्वितीयः दैवस्तबकः

वज्रं प्रहरणं विश्वस्य शरणम् । गायामि सगणं तद्ब्रह्म सगुणम् ॥ १ ॥
त्रैलोक्यपृथिवीसिंहासनपतिः । विश्वम्भरमतिर्दैवं मम वृषा ॥ २ ॥
सर्वोत्तमशचीकान्तासहचरः । विश्वादिरसिको दैवं मम वृषा ॥ ३ ॥
वृद्धोऽपि युवकोबुद्धोऽपि रिपुहा । सिद्धोऽपि रसिकोदैवं मम वृषा ॥ ४ ॥
नित्योऽप्यवयवी भीमोऽपि रुचिरः । स्वाराडपि नरो दैवं मम वृषा ॥ ५ ॥
विश्वस्य निरतोधाने च नयने । त्राणे च जनुषा दैवं मम वृषा ॥ ६ ॥
शास्त्राणि विदधल्लोकस्य चलने । नित्यांश्च नियमान्दैवं मम वृषा ॥ ७ ॥
वन्दारुजनतामन्दारविटपी । बृन्दारकपतिर्दैवं मम वृषा ॥ ८ ॥
लोकारिदितिजप्रध्वंसनविधौ । निर्णिद्रकुलिशोदैवं मम वृषा ॥ ९ ॥
अन्तर्बहिरपि व्याप्तो जगदिदम् । पारे च विलसन्दैवं मम वृषा ॥ १० ॥
पारे स विगुणोलोकेत्र सगुणः । दुर्ज्ञेयमहिमा दैवं मम वृषा ॥ ११ ॥
यस्यार्धमखिलं व्याप्तस्य भुवनम् । स प्राज्यविभवोदैवं मम वृषा ॥ १२ ॥
क्रान्त्वा जगदिदं सर्वं स्थिरचरम् । एकः परिपचन्दैवं मम वृषा ॥ १३ ॥
नित्यं च भुवनव्यापाररसिकः । नित्यं च विचरन्दैवं मम वृषा ॥ १४ ॥
कर्ता स जगतां धर्तादमयिता । कल्याणचरितो दैवं मम वृषा ॥ १५ ॥
आत्मा च जनको राजा च जगताम् । इन्द्रो मुनिनुतो दैवं मम वृषा ॥ १६ ॥

दीप्तो दिविरविर्विद्युत्सुरपथे । वह्निः कुवलये दैवं मम वृषा ॥ १७ ॥
तारः सकलविज्ज्योतिश्च विततम् । प्राणश्च परमो दैवं मम वृषा ॥ १८ ॥
स्वर्गे सुरतनुर्हृद्येत्र स्वतनुः । पारे स विततुर्दैवं मम वृषा ॥ १९ ॥
साक्षीनिरशनः पक्षी नृतनुषु । अक्षीणविभवो दैवं मम वृषा ॥ २० ॥
अग्रे सितकरो मध्ये दिनकरः । मूले स दहनो दैवं मम वृषा ॥ २१ ॥
वीरेऽपि गुहावास्येव सततम् । पूर्णोऽपि विविधो दैवं मम वृषा ॥ २२ ॥
सूक्ष्मो विषयिणि स्थूलश्च विषये । सर्वत्र विततौ दैवं मम वृषा ॥ २३ ॥
हर्षप्रदमजोवर्षत्वकलुषम् । भव्यं मयि महो दिव्यं स मघवा ॥ २४ ॥

इति श्रीभगवन्महर्षिरमणान्तेऽवासिनो वासिष्ठस्य नरसिंहसूनोर्गणपतेः
कृताविन्द्रसहस्रे दैवस्तबको द्वितीयः ॥



## तृतीयो करुणास्तबकः

अशेषजगतो नृपाय वशिने । कृपाजलधये नमः कुलिशिने ॥ १ ॥
न शक्र तपसा न यज्ञविधिना । नरस्य महिमा कृपां तव विना ॥ २ ॥
सुधामपि महः किरन्त्य जरते । न तेषु विनता कृपा विजयते ॥ ३ ॥
न कोऽपि मनसो गुणः सुजनपा । महेन्द्र मनसो झरी तव कृपा ॥ ४ ॥
भवन्तमयि तद्विभो रुचिनिधिम् । भणन्ति विबुधाः कृपा जलनिधिम् ॥५॥
अनुग्रहकृते सदाप्यभिमुखी । अतस्तव विभा कृपा नत सखी ॥ ६ ॥
विषण्णमिह मां वृषन्नरुणया । त्व मावृणु दिवो विभो करुणया ॥ ७ ॥
कवाटकमिदं मनोविघटितम् । तवास्त्वविहतं कृपा झरगतम् ॥ ८ ॥
पदाहतभया सुराधिपदया । विनम्रवदने सरत्विह जने ॥ ९ ॥
विचित्रकरणा महेन्द्रकरुणा । स्तवेन मुखरे सरत्विह नरे ॥ १० ॥
तपस्वि जनपा दिवस्पति कृपा । हृदा विकसिते सरत्विह नते ॥ ११ ॥
तवेन्द्र विपुला वितीर्णशिरसि । दयारसझरी पतत्वयि मयि ॥ १२ ॥

सतां मतिमता यदिन्द्रनयनम् । यदुग्रविधया द्विषां प्रदमनम् ॥ १३ ॥
सदापि हृदये स्थितिर्यदचला । नरस्य सकला क्रिया यदमला ॥ १४ ॥
अशेषविषयावगाहनगुणा । अकुण्ठितगतिर्यदच्छधिषणा ॥ १५ ॥
तदेतदखिलं महद्विलसितम् । तवैव करुणा भरस्य फलितम् ॥ १६ ॥
न पश्यति तपो न पश्यति गुणम् । न पश्यति शुभक्रियां च निपुणम् ॥ १७ ॥
न पश्यति कृतं यथाविधि मखम् । न पश्यति रमा विलासि च मुखम् ॥१८॥
दया तव दिवो महीश महति । कवाटरहिते गृहे प्रवहति ॥ १९ ॥
पुरा तव दयामवाप्य ऋषयः । महेन्द्र विदधुर्हिरण्मययुगम् ॥ २० ॥
ततः प्रभृति ते कृपाविलसितम् । न भोक्तुमवनेरलोकि सुकृतम् ॥ २१ ॥
अहङ्कृतिमहा कवाटरहितम् । इदं मम गृहं महेन्द्रविहितम् ॥ २२ ॥
अनन्तविभवा निरन्तरजया । इह प्रवहतान्नवा तव दया ॥ २३ ॥
नरं सुरपतेर्विशोध्य निपुणा । इमं भुवि सुरं करोतु करुणा ॥ २४ ॥

इति श्रीभगवन्महर्षिरमणान्तेऽन्तेवासिनो वासिष्ठस्य नरसिंहसूनोर्गणपतेः
कृताविन्द्रसहस्रे करुणास्तबकस्तृतीयः ।

---

## चतुर्थः कटाक्षस्तबकः

### भयहारि वृत्तम्

तं दशशताक्षं शीतलकटाक्षम् । नौमि धुताशं वज्रधरीशम् ॥ १ ॥
उग्रमपि दक्षं भासुरकटाक्षम् । वीर्यधुतवृत्रं नौम्यदितिपुत्रम् ॥ २ ॥
आर्तजनपक्षं रक्षककटाक्षम् । प्राणिगणतातं नौमि पुरुहूतम् ॥ ३ ॥
देवमसदक्षं पावनकटाक्षम् । नौमि बहुमायं वासवममेयम् ॥ ४ ॥
तं पुरुषमीडे स्तुत्यगुणलक्षम् । स्वर्भुवनराज्ञी मोहनकटाक्षम् ॥ ५ ॥
यत्र तव दृष्टिर्वज्रधरहृद्या । नव्ययुगकर्त्री तत्र वरविद्या ॥ ६ ॥
तत्र वरलक्ष्मीः सन्ततमशून्या । तत्र सुगुणानां सम्पदपि मान्या ॥ ७ ॥
तत्र बलमुग्रं शत्रुमदहारि । तत्र नयवित्त्वं विश्वहितकारि ॥ ८ ॥
यं तवबलारे पावयति दृष्टिः । तत्र नरवर्ये सर्वशुभवृष्टिः ॥ ९ ॥

यत्र तव पूर्णा दृष्टिरतिभद्रा । भेदशतबुद्धिः तस्य न दरिद्रा ॥ १० ॥
किं नु सुकृतादी किं दुरितवादी । शक्र तव रक्षः सूदन कटाक्षः ॥ ११ ॥
भक्तिरसिकानां या पतति रवादी । सोऽयमितरेषां पक्वसुकृतादी ॥ १२ ॥
या पतितरवादी यत्र स कृपावान् । तस्य हृदि बोधः सर्वसमतावान् ॥ १३ ॥
पक्वसुकृतादी यत्र स विचित्रः । तस्य खलु भोगः काममतिमात्रः ॥ १४ ॥
ये गिरिशनाम्ना ये च हरिनाम्ना । ये गणपनाम्ना ये च रविनाम्ना ॥ १५ ॥
शक्तिरितिनाम्ना ये बहुलधाम्ना । ये च मतिमन्तो यह्व इति नाम्ना ॥ १६ ॥
त्वामयि भजन्ते भक्त्यतिशयेन । सर्वसुररूपं भूरिविभवेन ॥ १७ ॥
तेष्वपि दिवो भूनाथ तव दक्षाः । भक्तजनरक्षा दीक्षितकटाक्षाः ॥ १८ ॥
वासव भणन्तस्त्वामवरवद्ये । हन्त तव वेषं कञ्चन भजन्ते ॥ १९ ॥
तानपि दयावन्रक्षसि कटाक्षैः । पक्षपवनार्ता नौषधसदृक्षैः ॥ २० ॥
त्वत्पदमजानन्नप्यज पवित्रम् । मङ्गलगुणस्ते दृक्पतनपात्रम् ॥ २१ ॥
पावनकटाक्षैः संशमयपापम् । शीतलकटाक्षैः शक्र मम तापम् ॥ २२ ॥
मङ्गलकटाक्षैः साधय ममेष्टम् । किंच विबुधानां नाथ हर कष्टम् ॥ २३ ॥
भासुरकटाक्षैर्भासय तु मह्यम् । नाकनरनाथो ज्योतिरतिगुह्यम् ॥ २४ ॥

इति श्रीभगवन्महर्षिरमणांतेवासिनो वासिष्ठस्य नरसिंहसूनोर्गणपतेः
कृताविन्द्रसहस्रे कटाक्षस्तबकश्चतुर्थः ।

# इन्द्रसप्तशती

## प्रथमस्तनुमध्यावर्गः

धाता भुवनानां जेता दितिजानाम् ।
नेता त्रिदशानां त्राता भवतान्नः ॥ १ ॥
धर्ता सुकृतानां हर्ता दुरितानाम् ।
भर्ता मरुतां नः कर्ताऽस्तु शुभस्य ॥ २ ॥
जानामि मरुत्वन्मानाय यशस्ते ।
नानाविधवेषं ध्यानाय न रूपम् ॥ ३ ॥
वीर्ये सकलं त्वज्जम्भरान्तकनूनम् ।
देवासुरमर्त्यैर्युक्तं जगदूनम् ॥ ४ ॥
निर्जित्य समस्तान्भावानपि जिष्णो ! ।
सम्राड्भुवनानामासीः प्रभविष्णो ! ॥ ५ ॥
नाकं त्वमरक्षः पाकं युधि जित्वा ।
वृत्रं च विधूयामित्रं पविपाणे ! ॥ ६ ॥
एतानि विकुर्वन्भूतानि स पाकः ।
शुभ्रे विफलोऽभूदभ्रे तव जिष्णो ! ॥ ७ ॥
पाकः प्रभुरेव प्राणांश्च विकर्तुम् ।
यद्यम्बरनाथ ! त्वं न प्रतिकर्तुम् ॥ ८ ॥
प्रज्ञामुषसं तां ज्ञं चाजित ! सूर्यम् ।
यद्रक्षसि वृत्रात्तत्ते सुरकार्यम् ॥ ९ ॥

# गणपतिदर्शनम् ( वासिष्ठदर्शनम् )

## प्रथमः प्रमाणपरीक्षापटलः

### प्रथमः खण्डः

१—अथ व्याख्यानानि यथा दर्शनम् ।

२—तत्रादौ प्रमाणपरीक्षा ।

३—अक्षजं व्यष्टिज्ञानं प्रत्यक्षं तदेकं प्रमाणम् ।

४—अत्र ज्ञाता साक्षी ।

५—तदक्षभेदात्पञ्चविधम् ।

६—स्पर्शरसगन्धानामनुभूतिकाल एव ज्ञानं तदात्मकम् ।

७—अनुवादे स्मरणे च शब्दरूपम् ।

८—रूपस्यानुभूतौ स्मरणे च तदात्मकम् ।

९—अनुवादे शब्दरूपम् ।

१०—त्रिष्वपि तदात्मकं शब्दस्य ।

११—शब्दोऽत्र नादपर्यायः ।

१२—बलवदुत्तरमन्यथा ज्ञानं पूर्वज्ञानं प्रामाण्यस्यापवादः ।

१३—अपोदितप्रामाण्यं ज्ञानं भ्रमः ।

१४—संशये न कस्यचित्प्रामाण्यमनिर्धारितत्वात् ।

१५—पूर्वोत्तरयोस्तुल्यबलत्वे संशयवत् ।

---

### अथ द्वितीयः खण्डः

१—प्रत्यक्षेण लिङ्गेनेतरस्य प्रत्ययोऽनुमानं तदन्यत्प्रमाणम् ।

२—नियमेन तदेकसहवासि द्रव्यं द्रव्यान्तरस्य लिङ्गम् ।

३—एवं गुणो गुणान्तरस्य ।

४—कर्मणश्च ।

५—कर्मगुणस्य ।

६—नियतकारणं कार्यं कारणस्य ।

७—नियतोत्तरावस्था पूर्वस्याः ।

८—भूतकारणावस्था प्रत्ययाभ्यां भाविकार्यावस्थाप्रत्ययौ व्याख्यातौ ।

९—कस्यचिद्विप्रकर्षोऽन्यस्य नियमेन दूरीकर्तुः ।

१०—विप्रकर्षश्च देशतः कालतो वा ।

११—अनुभूतस्य सन्निकर्ष इव व्यावृत्तस्य विप्रकर्षश्च प्रत्यक्षः ।

१२—प्रमितेः प्रागभिलषितस्यैव व्यावृत्तिः ।

१३—कस्यचित्सन्निकर्षोऽन्यस्य नियमेन बाध्यस्य भूवस्य ।

१४—चेष्टा नियतनिमित्ता निमित्तस्य ।

१५—एवं लिङ्गान्तराण्यप्यूह्यानि ।



## अथ तृतीयः खण्डः

१—श्रद्धेयस्य साक्षिणोऽनुवादकं वाक्यमाप्तवाक्यम् ।

२—तदन्यत्प्रमाणमेकेषाम् ।

३—उपजीव्ये वा तस्य संग्रहः ।

४—तदपवादोऽन्यथा साक्षात्प्रत्यक्षं लिङ्गं च ।

५—यथा के साक्षिविप्रतिषेधे संशयवत् ।

६—ऐतिह्यमाप्तवाक्यान्नातिरिच्यते ।

७—तथापि तत्राप्तस्याज्ञातत्वात्तदन्यत्प्रमाणमेकेषाम् ।

८—यथा तात्पर्यं तस्य प्रामाण्यं न यथाश्रुतमिति गणपतिर्वासिष्ठः ।

९—सादृश्यं स्मृतोपमेयसदृशत्वेन प्रसिद्धस्य लिङ्गं तदुपमानमन्यत्प्रमाणमेकेषाम् ।

१०—अनुमानविशेषो वा ।



# वासिष्ठस्मृतिः

## प्रथमोऽध्यायः

सदेकमेतत्प्रागासीदणीयस्तदणोरपि ।
महतोऽपि महीयस्या शक्त्या सम्प्रज्वलत्त्वया ॥ १ ॥
गूढानां भूतबीजानां सदग्नौ प्राज्यवैभवे ।
शक्तिं ज्वालावशादासीदुद्गारः कोऽपि धूमवत् ॥ २ ॥
नाणूनि भूतबीजानि प्राक्सर्गात्सति संस्थितौ ।
चितिशक्त्यात्मकान्येव निराकाराणि सर्वथा ॥ ३ ॥
उद्गारः स महाशक्तेरन्तरिक्षमभूद्रजः ।
अपामतीव सूक्ष्माणां लोकं तमृषयो विदुः ॥ ४ ॥
स्थूला स्वप्पदमप्सु स्यात्सूक्ष्मा आपः समीरणः ।
अतीव सूक्ष्मास्ता एव कीर्त्यन्ते गगनाख्यया ॥ ५ ॥
चतुर्णामपि भूतानामभावः खमिति भ्रमः ।
अतिसूक्ष्माप्स्वरूपत्वाद्भाव एव खमुच्यते ॥ ६ ॥
गगनव्यापको भावः शुद्धदेशात्मकस्तुयः ।
सतो निखिलमूलस्य स शक्तेर्नातिरिच्यते ॥ ७ ॥
अनु प्रविष्टस्तत्कायमन्तरिक्षात्मकं प्रभुः ।
अन्यवत्सगुणो भूत्वा महेन्द्रो नाम कीर्त्यते ॥ ८ ॥
निरुपाधिः समाख्यातो विश्वातीतः प्रजापतिः ।
सोपाधिरन्तरिक्षेण महेन्द्रो विश्वनायकः ॥ ९ ॥
वदन्ति मातापितरावदितिं च प्रजापतिम् ।
परोक्षवादरुचयो महेन्द्रस्योपचारतः ॥ १० ॥
प्रजापतौ महेन्द्रत्वं गतेव्योम शरीरतः ।
व्योमाश्रयाऽदितिश्चाभून्माहेन्द्री नाम नामतः ॥ ११ ॥

नामान्तरेण माहेन्द्री महामायेति कथ्यते ।
महामाया महेन्द्रश्च दम्पती विश्वचालकौ ॥ १२ ॥

परस्तात्सर्वजगतामदितिश्च प्रजापतिः ।
महामाया महेन्द्रश्च जगदाक्रम्य तिष्ठतः ॥ १३ ॥

एवं सतश्च शक्तेश्च द्वे द्वे रूपे प्रदर्शिते ।
दविष्ठं निर्गुणं चैकं नेदिष्ठं सगुणं परम् ॥ १४ ॥

वर्तमाने पुनः पाके महाशक्तेः समन्ततः ।
गोलानि समजायन्त सूर्याणामतुलार्चिषाम् ॥ १५ ॥
अनुप्रविष्टस्तं सर्वं महेन्द्रः प्राज्यवैभवः ।
प्रत्यण्डं जगतां सम्राडेकैका देवताऽभवत् ॥ १६ ॥

यावानेकैकसूर्यस्य देशोभास्यश्चतुर्दिशम् ।
तावदेकैकमण्डं स्यात्तस्य शास्ता तदन्तरः ॥ १७ ॥

सूर्यकायो जगन्नाथो मित्रोनाम प्रकीर्त्यते ।
सूर्यमण्डलगा शक्तिरुषोदेवी समीरिता ॥ १८ ॥
उषसामपि सूर्याणां प्रत्यण्डं यद्यपि स्थितिः ।
अस्माकं प्रकृतौ तावदस्मद्ब्रह्माण्डपालकौ ॥ २० ॥

प्रत्यण्डं च पुनः शक्तेः पाके चलति सर्वतः ।
ग्रहगोलान्यजायन्त भास्वतः परितोरवीम् ॥ २१ ॥
तानि चानुप्रविष्टोऽसौ महेन्द्रः प्राज्यवैभवः ।
प्रतिगोलान्तरं दीप्यन्नेकैका देवताऽभवत् ॥ २२ ॥
अमुष्यार्कस्य राज्ये तु पृथिवी कश्चन ग्रहः ।
पृथिव्यन्तरमाविष्टो महेन्द्रोऽग्निरुदीर्यते ॥ २३ ॥

अग्नेरस्य पृथिव्येव शरीरं परिकीर्तितम् ।
भौतिकाग्निकथा सर्वा तत्तेजोवीचिजृम्भणाम् ॥ २४ ॥
भूमिमण्डलमाविष्टा महाशक्तिः परात्परा ।
भूमण्डलेश्वरी प्राज्ञैरग्नायी परिकीर्त्यते ॥ २५ ॥

वर्तमाने पुनः पाके मध्ये भूमिदिनेशयोः ।
महाशक्तेः प्रसारिण्याः शीतभानुरजायत ॥ २६ ॥

चन्द्रबिम्बान्तरा विष्टो महेन्द्रः पुनरव्ययः ।
शरीरी चन्द्रबिम्बेन वरुणो नाम गीयते ॥ २७ ॥

चन्द्रमण्डलमाविष्टा महाशक्तिः परात्परा ।
चन्द्रलोकेश्वरी प्राज्ञैर्वरुणानी प्रकीर्त्यते ॥ २९ ॥

अन्तरिक्षमिदं द्वेधा सूक्ष्मस्थूलतयोच्यते ।
सूक्ष्मं सूक्ष्ममहाप्राणं स्थूलं स्थूलसमीरणम् ॥ ३० ॥

अनुप्रविष्टो भगवान्द्वितीये वायुमण्डलम् ।
पुनरन्येन रूपेण बभूव मरुतां पतिः ॥ ३१ ॥

